व्याप्यविरुद्धयोस्तत्त्वेन निश्चितयोर्दर्शने विशेषदर्शनसत्त्वा-देव न संशयः ।

न च निरुक्तमेव व्याप्तिग्रहाभावविशिष्टमसाधारण्यमस्तु । एतस्यानुमितितत्कारणज्ञानाविरोधित्वेनादोषत्वात् । न च साधारणधर्मवत्ताज्ञानादेः साध्यसंशयसामग्रीत्वेन दोषत्वम् । तन्मात्रस्य सामग्रीत्वाभावात् । सामग्रीत्वे विरोधित्वे हेत्वाभासत्वायोगाच्च । तस्याः स्वरूपसत्या एव विरोधित्वात् । अन्यथा व्यभिचारित्वाव्यभिचारित्वसाध्यतदभावसाध्यसामानाधिकरण्यतदभावव्याप्याव्याप्यत्वपक्षधर्माधर्मत्वसहचरितप्रमेयत्वादिमत्त्वं सर्वत्र हेतौ पक्षे चाभासीभवेत् ।

एतेन पक्ष एव तदुभयसहचरितत्वमनुपसंहारित्वम् । पक्ष एवेत्यस्य सन्दिग्धसाध्यक एवेत्यर्थात् साध्यसन्देहाविषयताव्याप्यसाध्यसिद्ध्यनुकूलव्याप्तिग्रहौपायिकसत्ताकत्वं पर्यवसितम् । तादृशी हि सत्तान्वये हेतोर्व्यतिरेके तदभावस्येत्यसाधारणव्यतिरेकिणोर्व्युदासः । स्वरूपसत्तादृशसंशयाविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यसंशयसामग्रीत्वेन तन्निश्चयप्रतिबन्धकम् । संशयसामग्र्या निश्चयप्रतिबन्धकत्वात् । हेतुमति साध्यसन्देहे हेतौ साध्यसामानाधिकरण्यसंशयस्यौत्सर्गिकत्वात् । साध्याभावेन स्ववृत्तिसाध्यसामानाधिकरण्याभावोपस्थापनादित्यपास्तम् । सामग्रीत्वेन विरोधित्वे हेत्वाभासत्वायोगात् । अन्यथा त्वसिद्ध्यादिनिश्चायकप्रत्यक्षसामग्र्या अपि तत्त्वप्रसङ्गात् । किञ्चैवं हेतोः साध्यसन्देहविषयमात्रवृत्तित्वमित्येवोक्तदूषकताया-

मुपयुक्तम् । तच्चासाधारणेऽपि । न चैवास्तु क्वचिदसाधारणसाङ्कर्यस्यादोषत्वादुपाधेरसङ्करादिति वाच्यम् । हेत्वाभासत्वानुपपत्तेरुक्तत्वाद् विश्वविषयसाध्यतदभावसन्देहेनान्वयव्यतिरेकसहचारग्रहाभावाद्व्याप्त्यग्रहेण ज्ञानरूपासिद्धिरेव ।

न चैतदुपजीव्यत्वाद्धेतुमति साध्याभावसन्देहो दोषः । सत्तयैव विरोधित्वात् । एतद्विषयस्तु हेतोः साध्याभावसामानाधिकरण्यं नास्त्येव केवलान्वयिसाध्यके । व्यतिरेकिसाध्यके तु साधारण्यरूपतया सन्दिग्धानैकान्तिकत्वमेव । साधारण्ये साध्यवद्वृत्तित्वांशस्य वैफल्यादिति संशयोत्थापकतया सव्यभिचारस्य न दोषत्वमित्युक्तं लक्षणमयुक्तमिति चेत् । सत्यम् । अनुमितितत्कारणज्ञानविघटकतयैव सव्यभिचारस्य दोषत्वम् । तथाहि साधारण्यं विपक्षगामित्वमात्रम् । तज्ज्ञानं व्यापकत्वग्रहविरोधि । असाधारण्यं सर्वसपक्षव्यावृत्तत्वमात्रम् । विपक्षव्यावृत्तत्वस्य साध्यसाधकतया तद्धेतूद्भावकेनैव स्वीकृतत्वात् । तच्च साध्यव्यापकीभूताभावप्रतियोगित्वम् । साक्षादनुमितिविरोधिपक्षे साध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुमत्ताग्रहस्य पक्षे साध्यविशिष्टबुद्धिविरोधित्वात् । सत्प्रतिपक्षे द्वौ हेतू अत्र त्वेक इति ततो विशेषः ।

न चैवंविधभेदेन पार्थक्येऽतिप्रसङ्गः । स्वतन्त्रेच्छस्य पर्यनुयोगानर्हत्वात् । वादिनस्तदभावसाधके तत्साधकत्वभ्रमरूपाशक्तिविशेषस्य, प्रतिवादिनस्त्वदुक्तहेतुनैव त्वदुक्तसाध्याभावः साधनीय इति शक्तिविशेषस्य च सूचकत्वाच्च ।

लक्षणं तु विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिः। विरुद्धान्येति प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोध्यर्थकम्। अर्थतो विरोधिविशेषणम्। तेन साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्यापरस्परासामानाधिकरण्यादीनां च निरासः। पक्षपदं धर्मिमात्रपरम्। यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपं तत्त्वमित्यर्थः।

निरुक्तं साधारण्यमसाधारण्यं च तथा। बाधप्रतिरोधौ तु धर्मिविशेषनियन्त्रितत्वान्न तादृशौ। गगनादेः साध्यत्वे सर्वं साध्याभाववत्तद्व्याप्यवत्त्वत्यादिकं तु साध्यवत्त्वग्रहमात्रे विरोधित्वेन सामानाधिकरण्यग्रहविरोधि। निर्धर्मितावच्छेदकसाध्यवत्त्वग्रहस्योक्तबाधाप्रतिबद्ध्यत्वे तु प्रकृतसाध्यकानुमितिसामान्याविरोधित्वं वाच्यम्। अनुमितौ धर्मितावच्छेदकता न नियमादस्ति। तत्साध्यकानुमितिसामान्यविरोधित्वमुक्तबाधादेर्न तु व्यभिचारादेरन्यहेतुकतत्साध्यकानुमित्यविरोधित्वात्। घटो गगनवानित्याद्यनुमितौ धर्मितावच्छेदकभेदादुक्तबाधादेरप्रतिबन्धकत्वे तु प्रकृतपक्षकप्रकृतसाध्यकानुमितिसामान्याविरोधित्वं वाच्यम्। न चैतदुक्तासाधारण्येऽव्याप्तम्। नित्यत्वव्यापकीभूताभावप्रतियोगित्वविशिष्टशब्दत्वादेः प्रकृतपक्षेऽग्रहदशायामन्यहेतुना तत्रानुमितेः। यत्रद्धर्मिवृत्तित्वं प्रकृतहेतोर्ज्ञायते तत्रानुमितिविरोधित्वं तु निष्प्रत्यूहम्।

निरुक्तविशिष्टशब्दत्वादेस्तद्धर्मिणि ग्रहेऽन्यहेतुनापि तत्र प्रकृतसाध्यानुमितेरव्यावृत्तिपदमत्यन्तायोगव्यवच्छेदार्थकम्।

तेन संयोगेन व्यभिचारिणि रासभादौ व्यभिचाराभावदशायां नाप्रसङ्गः । विरोधित्वं विरोधिज्ञानविषयत्वम् ।

नन्वत्र निरुक्तविषयत्वपर्याप्तिस्तदाश्रयत्वमात्रं वा । आद्ये निरुक्तासाधारण्यविशिष्टहेतौ तदभावः । तादृशहेतुविशिष्टपक्ष एव तत्सत्त्वात् । पक्षान्तरस्य च नासाधारण्यत्वम् । घटो नित्यः शब्दत्वादित्यादौ तदभावापत्तेः । द्वितीये एकदेशेऽतिव्याप्तिः । मैवम् । तत्साध्यकतद्धेतुकानुमितिसामान्यविरोधितावच्छेदकत्व-पर्याप्तेर्विवक्षितत्वात् । विरोधित्वं चेह कार्य्यानुत्पत्तिनियतत्वम् । नत्वन्यत् । साधारण्यज्ञानादेः साक्षादनुमित्यविरोधित्वात् । न तु तद्वत(?) पक्षे गौरवात् । तद्धेतोः पक्षवृत्तित्वाग्रहकालेऽपि तद्धेतु-कानुमित्यनुत्पादसत्त्वाच्च । ह्रदो वह्निमान् वह्न्यभावादित्यत्रत्यं साधारण्यमलक्ष्यम् । अनुमित्यनुत्पादस्त्वत्र बाधादिसत्त्वात् । असाधारण्यादिसङ्ग्रहायानुमितिपदस्य तत्साध्यकतद्धेतुकानुमि-तिपरत्वध्रौव्ये निरुक्तस्थलीयसाधारण्यलक्ष्यताया असम्भवात् । न च निरुक्तानुपसंहारित्वेऽव्याप्तिः । साध्यसंदेहविषयताव्या-प्यसाध्यसिद्ध्यौपयिकसत्ताकत्वविशिष्टहेतुविषयकत्वस्यापि निरु-क्तप्रतिबन्धकतावच्छेदकत्वसम्भवादिति मणिकृदनुयायिनः ।

अत्र विशिष्टान्तस्य स्वरूपसत एवोपयोगेन प्रागुक्तहे-त्वाभाससामान्यलक्षणायोगाद्धेतौ व्यतिरेकव्याप्तिमत्त्वावगाह्यनु-मितेर्लक्षणे निवेशेन साध्यादेरत्यन्ताभावाप्रतियोगित्वादिरूपस्य वक्ष्यमाणानुपसंहारित्वस्यैव लक्ष्यस्य सङ्ग्रह इति तु युक्तम् ।

दीधितिकृतस्तु मणिकृन्मते साधारणस्य व्यापकत्वग्र-

हविरोधः, असाधारणस्य सत्प्रतिपक्षोत्थापनम्, अनुपसंहारिणः सहचारग्रहविरोध इति प्रयोजनभेद एकहेत्वाभासत्वायोगाद् व्याप्तिग्रहप्रतिबन्ध एव त्रयाणां प्रयोजनम्। तत्र साधारणेन व्यापकत्वांशस्य, असाधारणेन सामानाधिकरण्यांशस्य, अनुपसंहारिणा च व्यतिरेकव्याप्तिग्रहस्य प्रतिरोधः । लक्षणं तु विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्याप्तिग्रहविरोधितावच्छेदकत्वम्। व्याप्तिश्चान्वयतो व्यतिरेकतश्च निवेश्या । साध्याप्रसिद्धिसाधनाप्रसिद्ध्योर्वारणायाविरोधिन इत्यन्तम् । साध्यसाधनभेदेन सव्यभिचारभेदाद्यत्र विशिष्टं साध्यं साधनं वाप्रसिद्धं तत्र तद्ग्रहाविरोधिन इति न देयम् ।

न च धूमवान् धूमव्यभिचारि वह्नेरित्यादौ व्याप्तिग्रहस्याहार्यतया तद्विरोध्यप्रसिद्धिः । प्रागुक्तरीत्या तद्विषयाविषयकग्रहविरोधित्वस्य निवेशात् । न च नीलधूमादित्यादौ व्यर्थविशेषणत्वरूपव्याप्यत्वासिद्धावतिव्याप्तिः । तस्या व्याप्तिग्रहाविरोधित्वात्तत्सत्त्वेऽपि व्याप्तिग्रहात् । प्रमेयधूमत्वादिविशिष्टे च गौरवज्ञानं व्यावर्तकतयैव व्याप्तिग्रहविरोधि । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे तु व्याप्तिस्तत्रास्त्येवेत्यतोऽपि न दोषः । हेतौ साध्याव्यभिचरितसामानाधिकरण्याभावेऽपि साधारण्यमेव । व्याप्यत्वासिद्धिस्तु व्यर्थविशेषणस्थले। तस्य साधारण्यत्वाभावे तु व्याप्तिग्रहपदेन साध्ये साधनव्यापकत्वस्य साध्याव्यभिचरितत्वस्य वा साधने साध्यसामानाधिकरण्यस्य विशकलितस्य व्यतिरेकव्याप्तेश्च ग्रहो वाच्यः ।

तत्र विपक्षवृत्तित्वं साधारण्यम् । विपक्षत्वं साध्याभाववत्त्वम् । न तु निश्चयगर्भं तज्ज्ञानस्याविरोधित्वात् । न च वस्तुतो यत्र तन्निश्चयस्तद्वृत्तित्वज्ञानम् । तथा धूमाभाववदयोगोलकं द्रव्यवृत्तिर्वह्निरिति ज्ञानस्यापि विरोधित्वापत्तेः । न च गृह्यमाणसाध्याभावावच्छेदकताकधर्मप्रकारेण तत्, तथाकालपुरुषनिवेशापत्त्या गौरवात् । साध्याभाववद्वृत्तिर्हेतुरिति शाब्दज्ञानस्य विरोधित्वापातात् । हेतुसाध्याभावयोः सामानाधिकरण्यास्फुरणेन विरोधित्वासम्भवाच्च । साध्याभाववद्वृत्तिर्हेतुरिति ज्ञानस्य कथंचित् साध्ये हेतुमन्निष्ठाभावप्रतियोगिविषयकत्वेन विरोधित्वं सम्भवति ।

यत्तु साध्याभावांशे निश्चयरूपं शेषांशे संशयसाधारणं ज्ञानं विरोधि । न च साध्याभाववद्वृत्तिर्हेतुरिति ज्ञाने साध्याभावांशे धर्मितावच्छेदकाभावान्न निश्चयत्वसंभवः । साध्याभाववान् हेतुमान्न वेत्यस्य विरोधित्वं, हेतुमान् साध्याभाववान्न वेत्यस्याविरोधित्वमित्यत्र तात्पर्यात् । अन्यथा हेतुमति पक्षे साध्याभावसंदेहे सन्दिग्धानैकान्तिकत्वापत्तिः । तत्संदेहोत्तरं हेतुमान् साध्याभाववान्न वेति सन्देहस्यौत्सर्गिकत्वात् । तदुक्तम्—नहि पक्षे पक्षसमे वा व्यभिचार इति ।

तन्न । वह्निव्याप्यो धूम इति निश्चयकाले पक्षे साध्यसन्देहस्य हेतौ साध्याभाववद्वृत्तित्वाविषयकत्वात् । अन्यदानुकूलतर्कसत्त्वे ततस्तन्निरासः । अन्यथा विरोधित्वमेवेत्यदोषात् । अत एव पक्षः साध्यातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वादित्या-

दयोऽनुकूलतर्कादिविरहिणो बाधाद्यनवतारेऽपि संदिग्धानैकान्तिकतयाप्रयोजका गीयन्ते । तथा वह्निर्दाहानुकूलेत्यादिशक्तिसाधका अपि । अन्यथा पक्षातिरिक्ते सर्वत्र साध्यवत्तानिश्चयाद्व्याप्तिग्रहस्य दुर्वारत्वापत्तेः । पक्षाविपक्षान्यतरत्वादिना सर्वत्र सत्प्रतिपक्षप्रसङ्गाच्च ।

अथ साध्यतद्वदत्यन्तान्योन्याभावगर्भव्यभिचारयोरेकोपादानेऽन्यतराव्याप्तिः । साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयत्वेनाभावयोरनुगमेऽपि हेतुमति तादृशाभावस्य, तादृशाभाववति हेतुमत्त्वस्य, तादृशाभावे हेतुसामानाधिकरण्यस्य, साध्यतद्वदादौ हेतुमन्निष्ठात्यन्तान्योन्याभावप्रतियोगित्वादेश्चासङ्ग्रह इति चेत् । अत्राहुः । प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोधिनो ज्ञानस्य विषयतयान्वयव्याप्तिग्रहविरोधितावच्छेदकत्वेन विभजतां नासङ्ग्रहः । अविरोधिन इत्यन्तेन साध्याप्रसिद्ध्यादीनां निरासः । यदि चात्यन्ताभावादिगर्भव्यभिचारज्ञानस्य नान्योन्याभावादिगर्भव्याप्तिग्रहविरोधित्वमित्यादिकं विभाव्यते तदा ताः प्रातिस्विकरूपेणोपादाय तावद्व्याप्त्यवगाही ग्रहो निवेश्यः । साध्याव्यभिचरितसामानाधिकरण्यस्य व्याप्ये प्रसिद्धस्य विरहोऽप्येतद्विशेष एव । विशिष्टसाध्यविशिष्टसाधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयतया व्यापकत्वग्रहविरोधितावच्छेदकत्वं वा विभाजकम् ।

अविरोधिन इत्यन्तेन साध्यसाधनाप्रसिद्धिसाधनावृत्तित्वानां व्युदासः । साध्यावृत्तित्वसाध्यसामानाधिकरण्ययोर्विशे-

प्यदलेन तयोर्व्यापकत्वग्रहाविरोधित्वात् । साध्यात्यन्ताभाववद्वृत्तित्वादिविशिष्टसाध्यसामानाधिकरण्याभावोऽपि न व्यापकत्वग्रहविरोधीति तद्व्युदासः । काञ्चनमयधूमवान् वह्नेरित्यादौ विशेष्यव्यभिचारस्य विशिष्टे व्यापकत्वग्रहविरोधित्वात् सङ्ग्रहः। अत्यन्ताभावादिगर्भव्यभिचारज्ञानस्यान्योन्याभावादिगर्भव्यापकत्वग्रहाविरोधित्वे त्वत्रापि तावद्विषयकसमूहालम्बनग्रहो निवेश्यः । न च विपक्षवृत्तित्वमात्रस्य साधारण्यत्वे विरुद्धेऽपि तदापत्तिः। इष्टत्वात्। उपाधेरसङ्करे उपधेयसाङ्कर्यस्यादोषत्वादिति।

सपक्षव्यावृत्तत्वमसाधारण्यम् । सपक्षः साध्यवान्। तद्व्यावृत्तत्वं तद्वृत्तित्वग्रहविरोधित्वम् । प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहाविरोधितावच्छेदकत्वमिति निष्कर्षः। इत्थं च साध्यनिष्ठस्य साधनासामानाधिकरण्यस्यापि सङ्ग्रहः। साधने साध्यसामानाधिकरण्यग्रहेऽस्यापि विरोधित्वात्। तथाचाक्षुषस्पर्शवान् स्पर्शेन शब्दवत्त्वादित्यादौ विशेष्ययोरसामानाधिकरण्यस्य सङ्ग्रहः । तस्यापि विशिष्टसाध्यसाधनसामानाधिकरण्यग्रहविरोधित्वात्। न च साध्यस्यावृत्तित्वं बाधः साधनस्य तदसिद्धिस्तदप्यसाधारण्यं स्यात् । इष्टत्वात् । अन्यत्रासाङ्कर्ये क्वचित् साङ्कर्यस्यादोषत्वात् ।

निरुक्तमसाधारण्यमेव मणिकृतां विरुद्धत्वम्। इत्थं च मणिकृदुक्तं साध्यव्यापकीभूताभावप्रतियोगित्वरूपमसाधारणत्वमेतन्मते विरुद्धत्वम्। तथा च विरोध एव प्रतिरोधतया दोषः । न च साधारण्यादिलक्षणस्य तस्य तद्व्याप्येऽतिव्याप्तिः।

तत्तद्धेत्वाभासव्याप्यस्यापि प्रायशस्तत्तद्धेत्वाभासत्वाङ्गीकारात्। बाधव्याप्यं न तथा तस्य प्रकरणसमत्वात्। प्रकरणसमव्याप्यं तु न हेत्वाभासोऽविरोधित्वादिति।

अनुपसंहारित्वं च विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकं रूपम्। तच्च साध्यसाधनयोरत्यन्ताभावाप्रतियोगित्वं धूमाभावादौ वह्न्यभावाद्यभाववद्वृत्तित्वं, वह्न्यभावादौ धूमाभावाद्यव्यापकत्वं च। तथा धूमवान्वह्नेरित्यादौ व्यतिरेकव्याप्तिग्रहविरोधित्वात्। न चैतयोरेवानुपसंहारित्वरूपत्वं युक्तम्। न च वाच्यं ज्ञेयत्वादित्यादिसदनुमानगतमिति वाच्यम्। एतदनुमानस्य व्यतिरेकितया प्रयोगे दुष्टत्वध्रौव्यात्। अन्वयितया त्वनुमितिर्निष्प्रत्यूहा। न च धूमवान्वह्नेरित्यादौ धूमाभाववद्वृत्तिवह्न्यादिरूपे साधारण्येऽतिव्याप्तिस्तज्ज्ञानस्यापि वह्न्यभावे धूमाभावव्यापकत्वग्रहविरोधितया व्यतिरेकव्याप्तिग्रहविरोधित्वादिति वाच्यम्। वह्नित्वविशिष्टे धूमाभाववद्वृत्तित्वज्ञानस्य तदविरोरोधित्वात्। वह्न्यभावाभावत्वविशिष्टे तज्ज्ञानस्य विरोधित्वं त्विष्टम्। अत एव वह्न्यभावाभावत्वविशिष्टे धूमाभाववद्वृत्तित्वमनुपसंहारित्वमेवेत्याहुः।

यद्यपि व्यतिरेकव्याप्तिज्ञाने साध्यं प्रतियोगितयाभावे प्रकारः, अत्यन्ताभावाप्रतियोगिसाध्यमित्यादौ तु प्रतियोगित्वत्वेन प्रतियोगित्वाभावः साध्य इति कथं विरोधः। तथापि व्यतिरेकव्याप्तिज्ञानमपि संसर्गतया साध्ये प्रतियोगित्वविषयक-

मिति समानविषयत्वेन विरोधित्वमतेनेदम् । इतरथा त्वभाव-त्वावच्छेदेन प्रतियोगितया वाच्यत्वाद्यभाववत्त्वमनुपसंहारित्वं बोध्यम् । न च प्रतियोगितामात्रेण नोक्ताभाववत्त्वम् । वाच्य-त्वघटाद्युभयाभावे वाच्यत्वप्रतियोगिकत्वसत्त्वात् । किन्तु स्वरू-पसम्बन्धावच्छिन्नवाच्यत्वावच्छिन्नप्रतियोगितया । सा चाप्रसि-द्धेति वाच्यम् । निरुक्तावच्छिन्नेन प्रतियोगिताप्रकारतान्यतरेण निरुक्तावच्छिन्नसामान्येन तदभाववत्त्वस्य वाच्यत्वात् । न च साधारण्यत्वादिनैव दोषत्वानुद्भावने वादिनिवृत्तेश्च तत्त्वेनैव पार्थक्यं युक्तम् । स्वरूपसतोक्तरूपेण त्रयाणामैक्येऽनुमितिवि-रोधित्वेन बाधप्रतिरोधयोस्तज्जनकज्ञानविरोधित्वेनान्येषामैक्ये हेत्वाभासद्वैविध्यापत्तिरिति चेत् । न । स्वतन्त्रेच्छस्य नियोगपर्यनु-योगानर्हत्वादिति दिक् ॥

उद्देशक्रमेण विरुद्धलक्षणाय सूत्रम् —

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥**

**न्या० सू० १ । २ । ६ ॥**

विरुद्ध इति लक्ष्यनिर्देशः । तद्विरोधीति लक्षणम् । तत्सा-ध्यम् । विरोधस्तदभावव्याप्यत्वं तदधिकरणावृत्तित्वं वा । साध्यान्तरविरुद्धेऽतिव्याप्तिवारणायाह । सिद्धान्तमिति । सिद्धा-न्तः सर्वतन्त्रसिद्धान्तः पक्षः तमभ्युपेत्य तद्वृत्तितया यं प्रति-ज्ञाय तद्विरोधी यो हेतुत्वेन निर्दिश्यते स तद्विरुद्ध इति समु-दायार्थः । इदं च परार्थस्थलमभिप्रेत्य । प्रकृतसाध्यविरोधी

विरुद्ध इति फलितम् ।

न चाद्ये संयोगादिसाध्यकद्रव्यत्वादावतिव्याप्तिः । संयोगाद्यभावव्याप्यत्वस्य संयोगाद्यभावाभाववदवृत्तित्वस्य द्रव्यत्वादावभावात् । अस्ति चेदं गुणत्वादाविति लक्षणसंगतिः । साध्याभावाभावस्य साध्यरूपतयेदं साध्यसामानाधिकरण्यग्रहविरोधि । यदि च साध्याभावाभावत्वेन साध्यस्यासामानाधिकरण्यग्रहो न साध्यतावच्छेदकरूपेण तत्सामानाधिकरण्यग्रहविरोधी, तदा लाघवाच्च द्वितीयम् । इदं मणिकृन्मते विरुद्धत्वम् ।

दीधितिकृतां त्विदमसाधारण्यम् । विरुद्धत्वं तु साध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकृतहेतुत्वं पक्षवृत्तित्वेन विशेषितमविशेषितं वा । विशेषितं तत्पक्षकतत्साध्यकानुमितिसामान्यविरोधि। अविशेषितं तु तत्साध्यकतद्धेतुकानुमितिसामान्यविरोधि साध्याभावसाधकपरामर्शरूपम् । अनवगतसाध्यसहचारत्वे सति साध्याभावसहचारी विरुद्धः । अत एव पृथिवीतरभेदवती मेयत्वादित्यपि विरुद्धमिति प्राञ्चः । तदयुक्तम् । अनवगतत्वाद्यंशज्ञानस्याविरोधित्वात् । उक्तो हेतुश्च साधारण एवेति दिक् ।

अयं च बाधस्वरूपासिद्ध्यन्यतरसंकर आवश्यकः साधारण्यादिसंकरः । क्वचिद् गगनादिहेतौ साधारण्याभावाज्ज्ञानासंकराच्च पार्थक्यम् ॥

उद्देशक्रमेण प्रकरणसमं लक्षयति—

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ न्या०सू०१।२।७ ॥**

प्रकरणसम इति लक्ष्यनिर्देशः । प्रकृष्टमगृहीताप्रामाण्यकं करणं साध्याभावसाधकपरामर्शरूपं समं समानकालीनं यस्य स्वसाध्यसाधकपरामर्शविशिष्टस्य हेतोः स प्रकरणसमः । साध्यतदभावसाधकपरामर्शयोः सत्त्वकाल एव सत्यसति वा साधने सत्प्रतिपक्षव्यवहारात् । अत एवायं सत्प्रतिपक्ष इति गीयते । सन् प्रतिपक्षो यस्येति व्युत्पत्तेः । एतद्व्यवहारविषयत्वं लक्ष्यतावच्छेदकं लक्षणमाहुः । यस्मादिति । प्रकरणं परविप्रतिपत्त्यादिरूपप्रकरणविषयीभूतं साध्याभावस्तच्चिन्ता तदनुमितिर्यस्मात् स तत्सहितः स्वसाध्यनिर्णयार्थमपदिष्टः स्वसाध्यसिद्ध्यौपयिकपरामर्शविशिष्टप्रकृतहेतुरित्यर्थः । बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविशिष्टप्रकृतहेतुत्वं लक्षणं फलितम् ।

न चायं वह्निव्याप्यवान् वह्न्यभावव्याप्यव्याप्यवांश्चेति परामर्शादयं वह्निमान् वह्न्यभावव्याप्यवांश्चेत्यनुमितेः प्रामाणिकत्वे जनितफलेऽपि वह्निसाधकहेतौ सत्प्रतिपक्षत्वापत्तिः। इष्टत्वात् । अन्यथानुमितिद्वयेच्छायां प्रकृतानुमितेर्वह्न्यंशे भ्रमत्वविषयकत्वे वा द्वितीयानुमित्यापत्तेः । न च वह्न्यभावपरामर्शकालीनवह्निपरामर्शविशिष्टत्वस्य वह्निपरामर्शोत्पत्तिकालावच्छेदेनापि सत्त्वात्तत्कालावच्छेदेन सत्प्रतिपक्षत्वापत्तिः । बाधोपस्थितिसमर्थपरामर्श-

कालावच्छेदेन साध्यसिद्धिसमर्थपरामर्शविशिष्टत्वस्य वाच्यत्वात्। एतेन यत्र भाविवह्न्यभावव्याप्यज्ञानमप्रमेति ज्ञानं ततो वह्नितदभावव्याप्यवत्तानिश्चयोऽथ वह्नेरनुमितिरप्रामाण्यज्ञाननाशश्च तत्र सत्प्रतिपक्षत्वापत्तिरप्यपास्ता। द्वितीयक्षणे सत्प्रतिपक्षस्येष्टत्वात्। प्रथमक्षणे त्वप्रामाण्यग्रहसत्त्वेन परामर्शस्य बाधोपस्थितिसामर्थ्याभावादिति।

यत्तु स्वार्थानुमान एवायं दोषः। प्रतिवादिना तदभावानुपन्यासेन स्थापनाया व्याप्तिपक्षधर्मत्वस्योभयवादिसिद्धत्वात्। प्रतिस्थापनायास्तु तत्त्वमन्यतरासिद्धमिति प्रथमेन द्वितीयस्य बाधितत्वादिति। तन्न। नहि सम्भवन्तः सर्व एव हेत्वाभासा उद्भाव्या आधिक्यप्रसङ्गात्। किंतु यथाकाममेकः। तथा च प्रतिपक्षोद्भावनेऽपि नाप्रतिषेधमात्रेण व्याप्त्याद्यभ्युपगमः। तदुपगमेऽपि स्वहेतोर्व्याप्त्यादिकं यावत् परेण न निषिध्यते तावत् सत्प्रतिपक्षो निरपवादः। न च वस्तुनोऽव्यात्मकतया विरुद्धोभयव्याप्यवत्त्वमेकत्र दुर्ग्रहम्। हेतोः परस्पराभावव्याप्यतयैव विरोधात्। तदग्रहे एकत्र निर्णयाविरोधात्।

स च निर्णयः क्वचित् समूहालम्बनप्रत्यक्षात्मा। क्वचित् क्रमेण। प्राक्सिद्ध्यादिसत्त्वेन प्रथमादनुमित्यनुत्पत्तेः। क्वचित्तदभावव्याप्यव्याप्यतद्व्याप्यव्याप्ययोः समूहालम्बनादितोऽनुमित्यादिरूपोऽपि संभवति। ननु विरोधिपरामर्शेनैव प्रतिरोधे प्रत्यक्षशब्दाभ्यां स न स्यादिति चेत्। न। भवत्येवं प्रत्यक्षस्य स्वरूपसत्त्वयैव बाधकत्वात्। कथायां तदुपन्यासस्तु कदाचिल्लिङ्ग-

भावेन । विरोधिवाक्यज्ञानमात्रं तु नानुमानविरोधि । विरोधिनिर्णयसामग्रीत्वेन च क्वचिद्विरोधित्वमात्रत्वमिष्टम् । नरशिरःशौचानुमानवदिति । दूषकताबीजमस्य परस्परप्रतिबन्धेन निर्णयाजनकत्वम् ।

रत्नकोषकृतस्तु अनुमित्यात्मकसंशयजनकत्वं दूषकताबीजं तुल्यबलाभ्यां विरुद्धोभयनिर्णयज्ञानसामग्रीभ्यां जायमानज्ञानस्यार्थात् संशयरूपत्वात् । नहि निश्चयत्वं संशयत्वं वा कार्य्यतावच्छेदकमार्थसमाजासिद्धत्वात् । एवं च परामर्शाभ्यां स्वस्वसाध्यकानुमितिरर्थात् संशयरूपैव जायते । अत एव विप्रतिपत्तिवाक्यात् शाब्दसंशयो निष्प्रत्यूहः । फलबलकल्प्यश्च न्यूनाधिकसमबलभावः । सत्यामपि पीतत्वशुक्लत्वस्मृतौ समीपवर्त्तिनि सति दोषविशेषे पीतत्वस्यैव, असति तु शुक्लत्वस्यैव, दूरस्थे च स्थाना(?=ण्वा)दावसति विशेषदर्शने स्मृतयोरेव कोट्योः, सति चैकस्या एव नयनेन ग्रहात् ।

न चैवं स्मृतिरपि संशयात्मिका स्यात् । इष्टत्वात् । यदि नानुभवविरोधः । येन गुरुणापि निश्चयत्वेन संस्कारहेतुत्वमुपेयते । अथ तद्विरोधिनिश्चयत्वेन तद्विशिष्टबुद्धिसामान्ये विरोधित्वं, विरोधित्वं च तदनधिकरणवृत्तित्वविशिष्टत्वं तदभावतदभावव्याप्यादिसाधारणमिति चेत् । यदि वस्तुतो विरोधिनो निर्णयस्तथा तदा ह्रदत्वादिनिश्चये कथं वह्न्यादेर्भ्रमानुमितिः । अथ विरोधित्वेन तदा तदग्रहे नेह साध्यमिति निर्णयेऽप्यनुमितिप्रसङ्गः । न च विरोधसंसर्गकबुद्धिस्तथा ।

संसर्गतयापि विरोधभाने मानाभावात् ।

न चैवं कपिसंयोगाभाववानित्यादिनिश्चयस्यापि विरोधित्वापत्तिः । विरोधज्ञानविशिष्टस्याविरोधज्ञानविरहविशिष्टस्य वा ग्राह्याभावादिनिश्चयस्य विरोधित्वात् । विरोधाविरोधौ तत्तदधिकरणान्तर्भावेन तत्तद्धर्मितावच्छेदकान्तर्भावेन च ग्राह्यौ । नन्वस्तु तदभावनिर्णयत्वेनेव तदभावव्याप्यादिनिर्णयत्वेनापि तद्विशिष्टबुद्धिविरोधित्वम् । अन्यथा तदुत्तरं तद्भ्रमसंशयाद्यापत्तेरिति चेत् । न । सत्यपि शुक्लत्वादिव्याप्यनिश्चये शङ्खादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेन च पीतत्वादिव्याप्यवत्ताभ्रमेऽपि शुक्लत्वादेर्ग्रहात् । न चास्तु प्रत्यक्षान्यतद्विशिष्टबुद्धिविरोधित्वम् । क्वचिदुपनीतप्रत्यक्षेऽपि विरोधित्वात् । न चास्तु दोषविशेषाजन्यलौकिकनिश्चयान्यानाहार्यतद्विशिष्टबुद्धिविरोधित्वम् । शाखादौ करादिभ्रमे दूरतस्तद्भ्रमात्प्राग्गृहीतस्यापि सन्निकृष्टस्थाणुत्वादेरग्रहणात् । तस्मात्तत्तत्स्थलविशेष एव तस्य विरोधित्वान्नानुमित्यादौ तद्विरोधित्वमिति संशयाकारानुमितिर्निष्प्रत्यूहेत्याहुः ।

अत्र वदन्ति । दोषविशेषलौकिकसन्निकर्षविशेषाद्यजन्ये तद्विशिष्टज्ञाने तत्त्वेन विरोधित्वम् । न तु तद्वत्त्वेन(?=तद्वत्त्वेन) प्रतिबध्यप्रतिबन्धकभावेऽतिगौरवात् । न च तादृशे प्रत्यक्ष एव तत्त्वम् । सामान्ये बाधकाभावात् । तत्सत्त्वे शाब्दादिबुद्ध्यनुत्पत्तेश्च । न च तद्व्याप्यवत्तानिश्चयविरहविशिष्टतत्त्वेनैव विरोधित्वम् । अन्यथा कोटिद्वयविशेषदर्शने संशयो न स्यादिति वाच्यम् ।

विनाप्रामाण्यग्रहं संशयाभावस्येष्टत्वाद्विशिष्टान्तनिवेशे माना-भावात्। न च तदभावव्याप्यवत्तानिश्चयविशिष्टान्यतद्विशिष्टबु-द्धित्वेनैव निरुक्तधर्मापेक्षया लघुना प्रतिबद्ध्यत्वात् संशयाका-रानुमितिः सुघटेति वाच्यम्। तदुपनीतभानप्रात्यक्षिकसंशया-देरपि तादृशविशिष्टत्वोक्तियोग्यस्याप्रतिबद्ध्यत्वापत्तेः। उप-नीतभानादिर्न तद्विशिष्टः किन्तूक्तानुमितिरेवेति तु सर्वज्ञानि-र्णेयम्। सामग्र्याः कार्य्यनिर्णयाधीननिर्णयत्वोपगमे तत्-कार्य्याव्यवहितप्राग्वर्त्तित्वविशिष्टत्वेन हेतुत्वे एककारणपरि-शेषापत्तेः

ननु दोषविशेषादेः कारणत्वकल्पनादुत्तेजकत्वकल्पनैव युक्तेति दोषादिसत्त्वेऽनुमित्याद्यापत्त्या तादृशप्रत्यक्षत्वेनैव प्रति-बद्ध्यतेत्यनुमित्यादौ न सेति चेत्। न। दोषादिकाले इच्छादि-जन्यस्यापत्त्या दोषादेः कारणत्वावश्यकत्वात्। पश्यामि प्रस-ज्ञयामीति प्रतीत्या तत्र वैलक्षण्यस्वीकारात्। नीलघटज्ञानं जा-यतामित्यादीच्छासत्त्वे पीतघटादिज्ञानापत्तेश्च। न चानाहार्य-त्वस्यान्यत्राविशेषेणेच्छाविशिष्टान्यत्वस्य वक्तुं शक्यत्वेऽपि लाघवात् प्रतिबद्ध्यप्रतिबन्धकताद्यवच्छेदकतया विषयतावि-शेषत्वाङ्गीकारान्नेच्छाया उत्तेजकत्वम्। दोषलौकिकसान्निकर्ष-योस्तत्त्वे तु न बाधकमिति वाच्यम्। तयोरप्यवान्तरवैलक्षण्य-स्वीकारात्। उत्तेजकाविशेषितरूपेण परोक्षत्वेनापि प्रतिबद्ध्य-त्वावश्यकत्वाच्च। अन्यथा तत्सत्त्वे शाब्दादिबुद्ध्यापत्तेः।

वस्तुतो निर्वह्निर्वह्निमानित्यादिवाक्याच्छाब्दधीवारणाय व-

ह्न्यभावत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितप्रकार-तावच्छेदकतया परोक्षत्वावच्छिन्ने वह्नित्वादिभेदस्य हेतुत्वकल्पनान्न संशयाकारानुमित्यादिकमिति दिक् ।

निबन्धे तु कथमत्र तत्त्वनिर्णय इति जिज्ञासा सत्प्रतिपक्ष-फलम् । न च ज्ञातुमिच्छा जिज्ञासा, सा च ज्ञानेष्टसाधनताज्ञान-साध्येति कथं सत्प्रतिपक्षात् सेति वाच्यम् । असति प्रतिपक्षे न जिज्ञासा, सति च सेत्यन्वयव्यतिरेकाभ्यां प्रकरणसमस्यापि तद्धेतुत्वादिति मणिकृतः ।

हेतुसमीचीनत्वासमीचीनत्वसंशयजन्यदुःखाभावादिरूपेषु साधनताज्ञानद्वारेण जिज्ञासोपयोगित्वमात्रं, न तु हेतुत्वम् । अन्यत्र संशयस्थले जिज्ञासायामप्येवमिति तु दीधितिकृतः ।

सर्वमेतत् प्राचां सत्प्रतिपक्षव्यवहारविषयीभूतमुक्तम् । अनु-मितिविरोधिज्ञानविषय(?+ः) सत्प्रतिपक्षः । साध्याभावव्याप्यवान् पक्षः । साध्यवद्भेदव्याप्यवानपक्षः । पक्षनिष्ठौ तदुभय-व्याप्यौ । पक्षनिष्ठाभावप्रतियोगित्वपक्षवृत्तित्वाभावयोर्व्याप्यव-त्साध्यादि ।

नन्वेवं हेत्वाभासाधिक्यमिति चेत् । न । प्रकृतपक्षसाध्यवै-शिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृतपक्ष-साध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वेन सर्वेषां विभजनात् । अत्र सत्यन्तेन वह्न्यभावव्याप्यवद्धृदादेः प्रतिपक्षोन्नायकस्य व्युदासः । तदर्थश्च शुद्धपक्षतावच्छेदकावच्छिन्ने पक्षे शुद्धसाध्य-तावच्छेदकावच्छिन्नसाध्यवैशिष्ट्यग्रहविरोधित्वम् । तेन वन्ध्य-

भावव्याप्याभाववान् ह्रदो वह्निमान्, ह्रदो वह्न्यभावव्याप्याभाववद्ध्रदवृत्तिवह्निमानित्यादिग्रहविरोधित्वेऽप्युक्तप्रतिपक्षोन्नायकस्य न क्षतिः । अविरोध्यन्तेन काञ्चनमयो ह्रदः काञ्चनमयवह्निमानित्यादौ पक्षाप्रसिद्धिसाध्याप्रसिद्ध्युन्नायककाञ्चनमयत्वाभावव्याप्यवतोः पक्षसाध्ययोर्व्युदासः । विरोध्यन्तेन वह्निव्याप्याभावे साध्ये वह्निव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः ।

वह्निमान् ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवान् ह्रद आश्रयासिद्धिरेव, ह्रदे च पक्षे तादात्म्येन वह्निमद्ध्रदे साध्ये वह्न्यभावव्याप्यवान् ह्रदः साध्याप्रसिद्धिरेवेति नाव्याप्तिसम्भावना । ननु वह्न्यभावव्याप्यव्याप्याभाववान् ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यव्याप्यवद्ध्रदात्मकाश्रयासिद्धावतिव्याप्तिः । न चाविरोध्यन्तं नोन्नेयस्य विशेषणं, किन्तून्नायकस्यैवेति नायं दोषो निरुक्ताश्रयासिद्धेः प्रकृतपक्षग्रहविरोधित्वादिति वाच्यम् । वह्निमद्ध्रदत्वेन पक्षत्वे वह्न्यभावव्याप्यव्याप्याभाववत्त्वेन साध्यत्वे वह्न्यभावव्याप्यव्याप्यवद्ध्रदात्मके बाधेऽतिव्याप्तेः । तत्र प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिनो वह्न्यभावव्याप्यवद्ध्रदस्योन्नायके प्रकृतपक्षग्रहाविरोधित्वसत्त्वादिति चेत् । न । अविरोध्यन्तस्योन्नायके च विशेषणतयोक्तातिव्याप्तिद्वयाभावात् । न चाविरोध्यन्तस्योन्नायकविशेषणत्वे वह्न्यभावव्याप्याभाववान् ह्रदो वह्निमानित्यादौ ह्रदत्वावच्छेदेन वह्न्यभावव्याप्यवत्त्वरूपे सत्प्रतिपक्षेऽव्याप्तिः । तत्राश्रयासिद्धित्वस्यैवोपगमाद् वह्निमान् ह्रदो वह्निमानित्यादौ वह्न्यभावव्याप्यवद्ध्रदे तथैव वाच्यत्वात् ।

ननु मणिकृन्मतेऽसाधारणस्य दीधितिकृन्मते विरोधस्य सत्प्रतिपक्षतया दोषत्वे तत्रातिव्याप्तिरिति चेत् । न । उन्नायकत्वमित्यस्य यादृशविशिष्टविषयकत्वेन परामर्शस्यानुमितिहेतुत्वं तत्त्वमित्यर्थः । तच्च साध्याभावव्याप्यवत्पक्षादिकम् । परामर्शश्च प्रकृतसाधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वानवगाही ग्राह्य इत्यदोषात् । प्रकृतसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकृतहेत्वघटितत्वेनोन्नायकं विशेषणीयमिति तु न्यायः । निरुक्तविभाजकरूपेण ह्रदः काञ्चनमयवह्निमानित्यादौ वह्न्यभावव्याप्यवत्पक्षादिकं संगृह्यते ।

सूत्रार्थस्तु । प्रकरणं प्रक्रियमाणं निरुक्तविरोधिरूपं तच्चिन्ता तदनुमितिर्यस्मात् यादृशविशिष्टविषयकपरामर्शात् स तादृशविशिष्टो निर्णयार्थं दोषनिश्चयार्थं निर्णीतः प्रमितः प्रकरणसम इत्यर्थः ।

कथायां सत्प्रतिपक्षोद्भावने पञ्चावयवा यथासिद्धान्तं प्रयोज्या इति संप्रदायः । अयं हेतुः साध्यव्यभिचारीतिवदयं पक्षः साध्याभावव्याप्यवानित्युद्भावनं तु युक्तमिति दिक् ॥

साध्यसमलक्षणाय सूत्रम्—

## साध्याविशिष्टः साध्यत्वात् साध्यसमः ॥

## न्या० सू० १।२।८

साध्यसम इति लक्ष्यनिर्देशः । साध्यमसिद्धत्वेन । अत एवासिद्धिरित्यप्युच्यते । लक्षणमाह । साध्येति । साध्यं सिद्धिकर्म ।

अनुमितिहेतुपरामर्शविषय इति यावत्। सोऽविशिष्टो विशिष्टबुद्ध्य-विषयो यस्मात्स परामर्शविषयाभाव इत्यर्थः। विशिष्टबुद्ध्यविष-यत्वे हेतुमाह। साध्यत्वादिति। साध्यत्वात् साधनीयत्वादुभय-बाद्यसिद्धत्वादिति यावत्।

ननु परामर्शविषयाभावत्वं साध्याभावसाधनाभावादौ, हेत्वाभासत्वे सतीति विशेषणेऽपि ह्रदादिनिष्ठवह्न्यभावादिरूपबाधे, परामर्शविरोधित्वे सतीत्युक्तावपि हेतोः साध्यासामानाधिकरण्य इति(?=-ण्येऽति-)प्रसक्तम्। अप्रसक्तं च साधनपक्षविशेष-णासाध्यविशेषणाद्यभावविशिष्टे पक्षसाध्यादौ, पक्षादिनिष्ठे साध-नपक्षविशेषणादिमदन्यत्वे साधनादेः पक्षवत्यन्यत्वपक्षनिष्ठात्य-न्ताभावप्रतियोगित्वादौ च। न च प्रकृतपक्षे प्रकृतहेतोर्यद्विशिष्टज्ञानं प्रकृतसाध्यावगाहि तद्विरोधित्वं तदिति वाच्यम्। पक्षवृत्तित्व-विशिष्टसाध्याव्यभिचरितसामानाधिकरण्याभावाव्याप्तेः। कथम्। प्रकृतपक्षे प्रकृतसाधनवैशिष्ट्यस्य प्रकृतसाध्यस्य च ग्रहावि-रोधि यद्व्याप्तिग्रहविरोधि तदन्यत्वे सति परामर्शविरोधित्वं त-त्त्वम्। व्यभिचारादिवारणाय सत्यन्तम्। तत्राविरोध्यन्तेन वह्निमान् वह्निमानह्रदत्वादित्यादौ व्याप्तिग्रहविरोधिन्या अपि वह्निमदवृत्तिह्रदत्वादिस्वरूपस्वरूपासिद्धेः साध्यविशेषणासिद्धेश्च सङ्ग्रह इति चेत्। न। ह्रदः काञ्चनमयवह्निमान् काञ्चनमयधूमादि-त्यादौ तादृशग्रहाविरोधिनो व्याप्तिग्रहविरोधिनोऽप्रसिद्धेरिति चेत्।

मैवम्। साधारण्यनिरुक्तासाधारण्यानुपसंहारित्वाभिन्नस्य विषयतया ज्ञाननिष्ठपरामर्शविरोधितावच्छेदकरूपस्याऽसिद्धत्वात्।

यत्र साधारण्यादिकमप्रसिद्धम्, यत्र च वह्न्यव्यभिचारिमेयत्ववान् वह्निसमानाधिकरणह्रदत्ववान् वह्न्यभावव्यापकीभूताभावप्रतियोगिह्रदत्ववान्वा वह्निमान् मेयत्वाद्ध्रदत्वाद्वेत्यादौ यत्साधारण्यादिकमसिद्धिस्तत्र तदन्यत्वन्नोपादेयम् । शब्दानुगमस्याकिञ्चित्करत्वात् । घटाव्यभिचारिद्रव्यत्ववद् भूतलं नीलघटवद्द्रव्यत्वादित्यादौ घटसामान्याभाववद्वृत्तिद्रव्यत्वमसिद्धिः । नतु नीलघटाभाववद्वृत्तिद्रव्यत्वम् । वह्न्यव्यभिचारिमेयत्वान् वह्निमान् मेयत्वादित्यादौ वह्निव्यभिचारिमेयत्वमसिद्धिः । न तु मेयत्वाव्यापको वह्निः । वह्न्यव्यापकीभूताभावप्रतियोगिह्रदत्ववान् वह्निमान् ह्रदत्वादित्यादौ च वह्न्यभावव्यापकीभूताभावाप्रतियोगिह्रदत्वादिकमसिद्धिः । न तु वह्न्यभावसमानाधिकरणो ह्रदत्वाभावाभावाभाववत्वविशिष्ट इत्यलक्ष्यीभूततत्तत्साधारण्याद्यन्यत्वं देयमेवेति सूचनायोक्तं यत्साधारण्यादिकमिति ।

एतेन सामान्यत एव साधारण्यासाधारण्यभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः । वह्न्यव्यभिचारिमेयत्ववान् वह्निसमानाधिकरणह्रदत्ववान्वा पर्वतो वह्निमान् मेयत्वाद्ध्रदत्वाद्वेत्यादावाश्रयासिद्धिविरहेऽपि न क्षतिः । असिद्धित्रयस्यासार्वत्रिकत्वात् । आश्रयासिद्धिलक्षणस्य चासिद्धिघटितत्वान्नातिप्रसङ्गः । परामर्शे चान्वयव्याप्तिरुपादेया । तेनानुपसंहारित्वव्युदास इति कस्यचित्प्रलपितमपास्तम् ।

व्यतिरेकव्याप्तिविशिष्टपक्षधर्म्मत्वाभावादावव्याप्त्यापत्तेश्च । साधारण्याद्यवच्छिन्नानिरूपितविषयताज्ञाननिष्ठपरामर्शविरो-

धितावच्छेदकरूपं वा असिद्धिः। अत एव द्रव्यत्वाव्यभिचारिगुणद्रव्योभयसमवेतवान् द्रव्यत्वसमानाधिकरणगुणसमवेतकर्मासमवेतवान् घटो द्रव्यं सत्त्वात्, द्रव्यकर्मासमवेतवान् वा घटो द्रव्यं सत्त्वात् द्रव्यकर्म्मासमवेतादेवेत्यादौ गुणद्रव्योभयसमवेतादिनिष्ठद्रव्यत्वव्यभिचारित्वादेः सत्तानिष्ठद्रव्यत्वव्यभिचारित्वाद्यात्मकसाधारण्यादितोऽनतिरिक्तत्वेऽपि न क्षतिः। पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्यादावसिद्धिसम्पादनाय हेत्वाभाससामान्यलक्षणोक्ता प्रथमा रीतिरादर्त्तव्या। वस्तुतोऽपार्थकत्वादेवात्र दोष इति दिक्।

सा चासिद्धिस्त्रिविधा। आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धिभेदात्।

तत्र विषयतया ज्ञानस्य पक्षतावच्छेदकविशिष्टपक्षज्ञानविरोधितावच्छेदकरूपमाश्रयासिद्धिः।

काञ्चनमयः पर्वतो वह्निमानित्यादौ प्रकृतपक्षप्रकृतसाधनाग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकं रूपं स्वरूपासिद्धिः। अविरोधिन इत्यन्तेनाश्रयासिद्धिहेत्वासिद्ध्योर्निरासः। पर्वतो वह्निमान् पर्वतवृत्तिह्रदत्वादित्यादौ स्वरूपासिद्धिविरहेऽपि न क्षतिः। असिद्धित्रयस्यासार्वत्रिकत्वात्।

यत्र प्रकृतपक्षः प्रकृतसाधनं च कामिन्येव तत्र तदुभयग्रहाविरोधिन्याः कामिनीविशेष्यकज्ञानेच्छायाः पक्षभूतकामिन्यां हेतुभूतकामिनीवैशिष्ट्यज्ञानविरोधिन्या विषयतावच्छेदकस्य का-

मिनीज्ञानत्वादेर्वारणाय ज्ञानस्येति । अवच्छेदकपदस्य तत्कोटिप्रविष्टार्थकतया ज्ञानत्ववारणाय तयेति (?=विषयतयेति)। तदुभयं प्रकृतपक्षप्रकृतसाधनोभयम् । प्रकृतद्वयोपादानाद् गुणान्यत्वविशिष्टसत्त्वं तत्त्वं वा गुणत्वव्यभिचारित्वत्वावच्छेदकं वा गुणवृत्तित्वात्। तदवच्छेदकत्वाच्छब्दो द्रव्यं गुणान्यत्वे सति सत्त्वादित्यादौ नाव्याप्तिः । संगृह्यते चानेनानित्यं गगनं रूपवच्चाक्षुषस्पर्शवत्त्वादित्यादौ गगनादेर्निःस्पर्शत्वादिकम् । अनित्येति चाक्षुषेति च पक्षसाधनविशेषणम् । अविरोधिन इत्यन्तं प्रकृतलक्षणघटनार्थम् । गगनं रूपस्पर्शवत्त्वादित्यादौ त्वविरोधिन इत्यन्तं देयम् ।

एतदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः । सा च साध्यसाधनविशेषणासिद्धिव्याप्त्यभावादिरूपा । न च पर्वतः काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादावाश्रयासिद्धिस्वरूपासिद्ध्योरप्रसिद्ध्या तद्भिन्नत्वाप्रसिद्धिरिति वाच्यम् । तत्राभिन्नान्तस्यानुपादानात् पक्षादिभेदेन लक्षणभेदात् तत्स्थलीयासिद्धित्वस्यैव तत्र लक्षणत्वात् ।

यत्तु हेतुतावच्छेदकस्य व्याप्यतानवच्छेदकत्वं व्याप्यत्वासिद्धिः । यथा नीलधूमत्वादौ समानाधिकरणं सम्भवदवच्छेदकान्तरमपेक्ष्य गुरुत्वादिति । तन्न । अवच्छेदकत्वं यद्यनतिरिक्तवृत्तित्वं तदा निरुक्तगौरवं तदविरोधि । न च स्वसमानाधिकरणतादृशधर्मान्तराघटितत्वे सति तत्त्वं तत्सत्यम् । तस्यानुमितिहेतुज्ञानाविषयत्वेनाकिञ्चित्करत्वात् । नाप्यन्यूनवृत्तित्वम् ।

आलोकाद्यवृत्तेर्धूमत्वादेरप्यतथात्वापातात् । नापि स्वरूपसम्बन्धविशेषः । द्रव्यं रूपादित्यादौ रूपत्वादेरप्यतथात्वापातात् । रूपादिचतुर्विंशतिसाधारणगुणत्वादेरेव तत्त्वौचित्यात् । एवं सास्नादिमत्त्वस्यापि गवादिव्याप्यतावच्छेदकत्वं न स्यात् गोत्वादिकमपेक्ष्य गुरुत्वात् । न चेष्टापत्तिः । अनुमितिहेतुज्ञानाविरोधिनस्तादृशावच्छेदकत्वाभावस्याकिञ्चित्करत्वात् । प्रमेयत्वादिसामानाधिकरण्येन व्याप्त्यवगाहिवह्निमदन्यावृत्तिप्रमेयवानित्यादिज्ञानादनुमित्यनुत्पत्त्या हेतुतावच्छेदकावच्छेदेन ज्ञानस्यानुमितिहेतुतायामनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यैवोपयोगसिद्धेरिति ।

परार्थस्थले तु दृष्टान्तस्य साधनवैकल्यं व्यर्थविशेषणत्वमपि हेतौ निग्रहस्थानम्—हेत्वाभासाश्च (न्या०सू०५।२।२८) इति चकारेण समुच्चयादिति । न चाश्रयासिद्धित्वादिना ज्ञानादुद्भावनाच्च वादिनिवृत्तेरसिद्धित्रैविध्यम् । स्वरूपसतोक्तरूपेण महर्षिणा विभजनात् । साधारणादेः सव्यभिचारत्वेनेव । न च साधारणे व्याप्त्यभावे आवश्यक इत्यसिद्धिरेवास्तु । व्याप्त्यभावाज्ञाने साधारण्यज्ञानादप्यनुमितिप्रतिबन्धात् । अत एव ये व्याप्तिपक्षधर्मताविरहरूपास्तेऽसिद्धिमध्यमध्यासते । तदन्ये च यथायथं सव्यभिचारादय इति सिद्धान्तप्रवादः ।

अथ सुषुप्तौ जागरेऽपि व्याप्तिपक्षधर्मतासत्त्वेऽपि तदनिश्चयेऽनुमित्यनुत्पादो हेत्वाभासप्रयोज्यः । सव्यभिचारादौ तथा-

वधारणात्। स च व्याप्तिपक्षधर्मतानिश्चयरूपायाः सिद्धेरभाव एव। न चैवं सद्धेतोरप्याभासत्वं, तदाभासस्यापि हेतुत्वं स्यात्। इष्टत्वात्। सोऽयं स्वरूपसन्नेव दोषः कारणत्वाभावादिति चेत्। न। एवं सति सव्यभिचारादेरप्यत्रैवान्तर्भावप्रसङ्गात्। यदि च तस्मात्सिद्धिर्नोत्पद्यत इति तस्योपजीव्यत्वम्। तदाश्रयासिद्ध्यादिज्ञानादपि सा नेति तुल्यम्। असिद्धिश्च जाता परस्योद्भाव्येत। स्वज्ञानार्थमुद्भावितासिद्धिनिर्वाहार्थं चाश्रयासिद्ध्यादिज्ञानमावश्यकम्। न स्याच्च हेतुतदाभासविवेकः। अज्ञायमानस्य च न हेत्वाभासत्वमित्यसकृदुक्तम्। सुषुप्त्यादावनुमित्यनुत्पादः कारणाभावात्। नहि कार्याभावप्रतिबन्धकमात्रादेव किन्तु कारणाभावादपि। नह्यसिद्ध्यभावत्वेन हेतुत्वं, किन्तु सिद्धित्वेनैवेति न किञ्चिदेतत्॥

बाधं लक्षयति—

## कालात्ययापदिष्टः कालातीतः॥ न्या०सू०१।२।९

कालातीत इति लक्ष्यनिर्देशः। कालात्ययापदिष्ट इति लक्षणम्। हेत्वपदेशस्य हि साध्यसन्देहविशिष्टः कालः। यदाहुः "सन्दिग्धे न्यायः प्रवर्त्तते" इति। तस्यात्यये सत्यपदिष्टो निर्दिष्टः। प्रमाणेन बाधावतारे सति साध्यसन्देहविशिष्टं कालमतिक्रम्य निर्दिष्ट इति फलितम्। लक्ष्यकथनस्याप्ययमर्थः। किन्तु तादृशव्यवहारविषयत्वं लक्ष्यतावच्छेदकमिति भेदः। बाधः साध्याभावज्ञानप्रमात्वं, प्रमितसाध्याभाववान् पक्षो वा।

प्रमात्वनिर्णयोऽपि विरोधित्वे तन्त्रमिति प्राञ्चः ।

नव्यास्तु प्रमात्वनिश्चयस्य पक्षे साध्याभावादेरनवगाहित्वे तद्विषयत्वेनैव प्रतिबन्धकत्वाद् विनापि प्रमात्वनिश्चयमप्रामाण्यज्ञानशून्यसाध्याभाववत्पक्षादिनिश्चयादेवाशाब्दमानसानुमित्यादिप्रतिबन्धाच्च शून्यत्वस्य स्वरूपमत एवोपयोगात् साध्याभाववत्पक्षादिकमेव बाधः । सर्वत्र हि निश्चयस्य हेतुत्वे प्रतिबन्धकत्वे च भ्रमत्वाग्रहः । संशयसाधारणज्ञानमात्रस्य तद्धेतुभ्रमत्वानिश्चयस्य(?) स्वरूपसन्नेव प्रयोजकः । प्रमात्वज्ञानं क्वचित्तत्रैवोपयुज्यते । अन्यथाकाङ्क्षाकृतिसाध्यत्वादिनिश्चयहेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यताव्यभिचारज्ञानादीनां प्रमात्वज्ञानं प्रयोजकीभवेत् । शङ्खादौ शुक्लत्वाद्यनुमितिर्न विना तदप्रामाण्यग्रहम् । तथा च साध्याभाववान् पक्षः, साध्यवद्भेदवान् पक्षः, पक्षवृत्ति तदुभयं, साध्यवत्सामान्ये पक्षान्यत्वं, दण्डविशिष्टपुरुषादौ साध्ये पक्षे विशेष्याभावादिकं,प्राचीननये पक्षवृत्ति साध्यसामान्यादिकमपि प्रत्येकमेव बाधः । तन्निश्चयश्च दोषविशेषलौकिकसन्निकर्षविशेषाजन्यानाहार्यज्ञानमात्रे विरोधी । अत एवानन्वयनिश्चयविरहो योग्यतेत्याचार्याः ।

विभाजकं तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोध्यनुमापकत्वे प्रकृतपक्षसाध्यग्रहाविराधित्वे च सति प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वम् । अनुमापकत्व इत्यन्तेन सत्प्रतिपक्षव्युदासः । अविरोधित्वे चेत्यन्तेन पक्षसाध्यविषयिणी( ? )सिद्धि-

व्युदासः । पर्वतो वह्निव्याप्यधूमाभाववानित्यादौ वह्निव्याप्यधूमवत्पर्वतादिरूपे बाधे वह्न्यभाववत्पर्वतत्वादिना पक्षग्रहस्य विरोध्युन्नायकत्वस्य विरोधित्वस्य च सत्त्वादुभयत्र पक्षे प्रकृतेति । तत्रैव बाधे वह्न्यभाववत्पर्वतकालीनवह्निव्याप्यधूमाभावत्वरूपेण साध्यग्रहस्य च तदुभयसत्त्वादुभयत्र साध्ये प्रकृतेति ।

विशेष्यदलार्थस्तु शुद्धपक्षतावच्छेदकावच्छेदेन शुद्धसाध्यतावच्छेदकावच्छिन्नप्रकारकः, शुद्धसाध्यतावच्छेदकावच्छेदेन साध्यविशेष्यकः, आधेयतया शुद्धपक्षतावच्छेदकावच्छिन्नविशेषणको वा यो ग्रहस्तद्विरोधिज्ञानविषयत्वम् । एतल्लाभायैव पक्षसाध्यवैशिष्ट्यग्रहेति श्लिष्टाभिधानमिति वागीशाः । तन्न । पर्वतो वह्निमानित्यादौ यत्किञ्चिद्वह्नौ पर्वतावृत्तित्वस्याप्याभासतापत्तेः । तस्मात्प्राकल्प एव युक्तः ।

तत्रांशतो बाधसाधारण्यायावच्छेदेनेत्यन्तम् । तत्र तस्य पर्वतो वह्निमानित्यादौ पर्वते वह्नौ च काञ्चनमयत्वाभावस्य वारणाय शुद्धेतिद्वयम् । तस्य काञ्चनमयत्वेन तदुभयवैशिष्ट्यग्रहं प्रत्येव विरोधित्वाददोषः । शुद्धपर्वतत्वावच्छेदेन शुद्धवह्नित्वेन साध्यत्वे शुद्धवह्नित्वावच्छिन्नाभावविशिष्टपर्वतत्वविशिष्टमात्रं दोषः । वैशिष्ट्यमभावीयविशेषणतामात्रम् । पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यत्वे तु शुद्धपर्वतत्वव्यापकविशेषणतया शुद्धवह्नित्वावच्छिन्नाभावविशिष्टशुद्धपर्वतत्वविशिष्टो दोषः । नीलपर्वतत्वाद्यवच्छेदेन वह्न्यभावग्रहे, पर्वतत्वावच्छेदेन

लोहितवह्नित्वाद्यवच्छिन्नाभावग्रहे च तादृशानुमितेः शुद्धेति-द्वयम्। निरुक्तविशेषणतया निरुक्ताभावस्य नीलपर्वतत्वादि-विशिष्टे ग्रहेऽपि तादृशानुमितेस्तृतीयशुद्धेति। एकविभाजकरूपा-क्रान्तस्यापि क्वचित्कस्यचिद्दोषत्वं साधारण्यानुपसंहारित्व-वदविरुद्धम्।

तदिदं पर्यवसितम्। शुद्धपर्वतत्वव्यापकसंयोगेन शुद्धपर्व-तत्वावच्छिन्नविशेष्यकवह्नित्वावच्छिन्नाभावनिश्चयत्वेन प्रतिब-न्धकत्वमिति शुद्धपर्वतत्वाद्यवच्छिन्नविशेष्यक एव शुद्धपर्वतत्वा-दिव्यापकत्वं संसर्गतया भासते। पक्षतावच्छेदकावच्छेदेनानु-मितिनिरुक्त्यर्थं तथैव सामग्रीकल्पनादिति द्वितीयं शुद्धेति न देयमिति बहवः। वस्तुतस्तु यत्र यत्र धूमस्तत्र शुद्धपर्वतत्वव्या-पकसंयोगेन वह्निरिति व्याप्तिग्रहे यद्धर्मविशिष्टे धूमो गृह्यते तद्धर्मावच्छेदेनैव तेन सम्बन्धेन वह्निभ्रमः संशयश्च निवर्त्तत इत्यविवादम्। इत्थं च तज्जन्यप्रत्यक्षानुमित्युत्तरमपि तथैव त-स्यान्यधर्मविशिष्टे सम्बन्धत्वाभावेऽपि वायौ रूपादिसमवाय-वत्तेन सम्बन्धेन भ्रमस्तु दुर्वार एव। शाब्दबोधे तु तथा नियम आकाङ्क्षाबलाद्भेदाभेदसम्बन्धभाननियमवत्। अत एव न सुरां पिबेदित्यादौ बोधनियम इति न किञ्चिदेतत्।

पर्वतत्वावच्छिन्नविशेष्यकसंयोगावच्छिन्नवह्नित्वावच्छिन्नप्र-कारताकग्रहं प्रति तु शुद्धपर्वतत्वव्यापकविशेषणतया शुद्धपर्वत-त्वावच्छिन्नविशेष्यताकशुद्धवह्नित्वावच्छिन्नाभावप्रकारकनिश्चय-त्वेन विरोधिता। शुद्धपर्वतत्वाद्यवच्छिन्नत्वं च पर्वतत्वादिभिन्ना-

वृत्तिनिरवच्छिन्नावच्छेदकतानिरूपकत्वम् । नीलनीलेतरपर्वतत्वादिनिष्ठावच्छेदकता तु नीलनीलेतरत्वादिनिष्ठानां, न तदितरादेः पर्वतादौ विशेषणत्वात् । एकस्या अवच्छेदकताया अंशभेदेन नानासम्बन्धावच्छिन्नत्वम् । प्राचां मतेऽपि तस्यास्तत्तत्सम्बन्धघटितत्वात् । सामानाधिकरण्येन नीलादेः पर्वतत्वाविशेषणत्वे तु तन्निष्ठा न निरवच्छिन्नेत्यदोषः ।

न च प्रतिबध्यदिशि संयोगावच्छिन्नेत्ययुक्तं संयुक्तसंयोगेन ग्रहस्यापि प्रतिबध्यत्वापत्तेरिति वाच्यम् । तत्र संयुक्तसंयोगत्वादेः सम्बन्धतावच्छेदकतया संयोगत्वस्य सम्बन्धतानवच्छेदकत्वात् । पर्वतत्वव्यापकसंयोगादेः सम्बन्धहेतुव्यापकत्वान्तमुपलक्षणतया भासत इति प्रतिबध्यत्वमविरुद्धम् । निरुक्तसंयोगत्वेन महानसीयवह्निसंयोगत्वादिना च सम्बन्धत्वे तु अत्र वह्नित्वावच्छिन्नप्रतियोगिकत्वं संयोगे भासत इति प्रतिबध्यत्वम् । संयुक्तसंयोगादौ तु संयुक्तादिघटकसंयोग इत्यदोषः । वह्नित्वाद्यवच्छिन्नप्रकारतानिरूपितसंयोगादिनिष्ठविषयतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकं प्रतिबध्यम् । संयुक्तसंयोगादौ तु निरुक्तप्रकारतानिरूपितसंयोगविषयतानिरूपिताश्रयनिष्ठविषयतानिरूपितसंयोगनिष्ठविषयतानिरूपिता पर्वतत्वाद्यवच्छिन्नविशेष्यतेति । न तथेत्यन्ये ।

अत्र संसर्गतया विरोधविषयकमेव ज्ञानं प्रतिबन्धकम् । विरोधश्च विशेषणानधिकरणतत्तद्विशेष्यवृत्तित्वमभावे तत्सम्बन्धे वा भासते । अत एव गुणाद्यन्तर्भावेन विरोधाद् गुणो न सं-

योगीत्यादिकं विरोधि, न तु वृक्षो न संयोगीत्यादीति बहवः ।

वस्तुतः संसर्गतया विरोधभाने मानाभावाच्छब्दानुमानादेर्विरोधाविरोधज्ञानकाले कार्यकारणभावभेदापातात्तत्तदाधिकरणान्तर्भावेनाविरोधज्ञानं संयोगाधिकरणत्वाद्यवच्छेदेन संयोगाभाववत्त्वादिज्ञानं चोत्तेजकमेव उत्तेजकाननुगमस्यादोषत्वादिति युक्तमाभाति ।

अत्रेन्द्रियभेदेनापि भेदं स्वीकुर्वन्ति । तत्तु श्वैत्यादिचाक्षुषोत्पत्तिक्षणे तद्द्वितीयक्षणे वा दोषोत्पत्तौ यदि न पीतत्वादिज्ञानं, यदि दोषनाशक्षणे पीतत्वादिचाक्षुषे तद्द्वितीयादिक्षणे न श्वैत्यादिचाक्षुषं तदा शोभते । न चैतदस्वीकारे मण्डूकवसाद्यञ्जनेन चाक्षुषोरगत्वादिभ्रमे स्पार्शनस्तदभावग्रहो न स्यात्, स्याद्वा चाक्षुषोऽपीति वाच्यम् । तद्दोषस्य चाक्षुषतदभावग्रहं प्रत्येव विरोधित्वात् । न च गेहे चक्षुषा घटाभावग्रहे प्राङ्गणस्थघटेनेन्द्रियसान्निकर्षाद् (?) अन्यत्र चाक्षुषानङ्गीकारात् । अन्यथा गेहे आप्तवाक्याद्घटाभावनिश्चये तथा चाक्षुषापत्तेर्दुर्वारतापत्तेरिति न किञ्चिदेतत् ।

अथ बाधधीदशायां पक्षे हेतुग्रहे व्यभिचारधीरग्रहेऽज्ञानलक्षणासिद्धिरिति किं बाधस्य पार्थक्येन । तदुक्तं बाधायां हेतुरनैकान्तोऽसिद्धो वेति चेत् । न । बाधनिश्चयोत्पत्तिद्वितीयक्षणे शब्दादिना परामर्शात्, परामर्शद्वितीयक्षणे च लौकिकबाधग्रहेऽनुमित्यनुत्पत्तेस्तस्य दोषत्वात् । नहि तदासिद्धेः साधारण्यस्य वा दोषत्वं परामर्शस्य वृत्तत्वात् । उक्तश्च पक्षादेः साध्याद्-

त्तित्वादिकमपि बाधः । न च तत्रत्वे(?) व्यभिचारग्रहानियमः, साध्यव्याप्यहेतुमान् साध्याभाववांश्चेति बाधग्रहस्यापि परस्परोपश्लेषाविषयकतया व्यभिचाराविषयकत्वाच्च । नहि व्याप्तिनिश्चयकाले तद्विषयकत्वसम्भवः । किञ्च गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वात्, शिखरावच्छिन्नः पर्वतो वह्निमान् धूमादित्यादौ पक्षतावच्छेदककालदेशावच्छेदेन साध्याभाववत्त्वरूपबाधस्य न सांकर्यशङ्का ।

अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्त्वज्ञानं प्रयोजकम् । अन्यथा गृहीतभागासिद्धेर्घटत्वादितोऽपि पृथिवीत्वावच्छेदेन रूपादिसिद्धिप्रसङ्गात् । न च निरुक्तकालावच्छेदेन पृथिवीत्वधूमादिमत्त्वमिति चेत् । न । अवच्छेदकद्व(?)योर्भेदात् । पक्षतावच्छेदकव्यापकत्वरूपावच्छेदकत्वभाने पक्षे तथाविधावच्छेदकत्वावगाहिहेतुमत्तानिश्चयस्य प्रयोजकत्वेऽपि स्वरूपसम्बन्धाविशेषप्रकृतावच्छेदकत्वभाने तदभावात् रूपप्रागभावसाध्यकगन्धप्रागभावादेर्वह्निसाध्यकशिखरावच्छिन्नधूमादेस्तदवच्छेदेन सत्त्वादसत्त्वेऽपि भ्रमसम्भवाच्च ।

अपि च प्रसिद्धं बाधाश्च सिद्ध्यतीति बाधः पृथक् । तथा हि महानसीयवह्न्यादेरुपस्थितत्वादिरूपलाघवज्ञाने वह्निसामान्यसाध्यकधूमादेः सति बाधनिश्चये नानुमितिः, असति तु जायते । न चात्र व्यभिचारादिसम्भवः, महानसीयवह्निव्यभिचारग्रहस्य वह्नित्वावच्छिन्नव्याप्तिग्रहेऽविरोधित्वात् ।

नन्वत्र न महानसीयवह्नित्वादिनानुमितिस्तेन रूपेण व्याप-

कत्वाग्रहात्। किन्तु वह्नित्वादिना। तेन रूपेण ग्रहे च न महानसीयवह्नित्वाद्यवच्छिन्नाभावग्रहो विरोधीत्ययुक्तमेतत् । न च समानविषयत्वेनैव विरोधित्वादस्तु तथा, पृथिव्यादिरूपाभावनिश्चयेऽपि वायू रूपवान्न वेति संशयाद्रूपवानित्यनुमितेश्च । न चारूपमेव रूपत्वेन शङ्कितमारोपितं वा तद्विषयः, रूपान्यसामान्यं न रूपमिति निश्चयकाले सामान्यलक्षणादितः पृथिवीरूपत्वादिनोपस्थिते वस्तुमात्रे वाय्ववृत्तित्वनिश्चयकाले च सुतरां त्वन्मते तदसम्भवात्ताहशशङ्कादिविरहेऽपि तयोरानुभविकत्वाच्च । किञ्च दोषान्नेह श्वेतं द्रव्यमिति ग्रहे पीतशंख इत्यादेः, घटपटौ न स्तो दण्डी चैत्रो नास्तीत्यादिग्रहे घटोऽस्ति चैत्रोऽस्तीत्यादेर्ग्रहस्यानुभवान्न तत्सम्भवः। सल्लिङ्गपरामर्शत्वाद्बाधि( ?+त )तद्विशेषभानप्रसङ्ग इष्टापत्त्यापादकाभावाद्धियामौत्सर्गिकप्रामाण्यात्यागेन च परिहर्त्तव्यो विशेषबाधानवतारे त्वयापि तथैव वाच्यत्वात् ।

अत्र वदन्ति। लाघवादिज्ञानाद्व्यापकतानवच्छेदकरूपेणाप्यनुमितिस्तथैवानुभवात् । लघ्वर्थपरिच्छेदकत्वस्य प्रमाणमात्रस्वभावप्राप्तत्वात्तथा संशयादिविरहाच्च । यथा जीवनमरणान्यतरप्रतियोगी प्राणित्वादित्यादौ जीवनप्रतियोगित्वसिद्धिः, सकर्तृकं कार्य्यत्वादित्यादौ कर्त्तुरेकत्वादिसिद्धिः । अन्यथा क्षित्यादिकर्त्ता एकोऽनेको वेति संशयप्रसङ्गादिति ।

स्यादेतत् । लाघवात् संसृष्टत्वज्ञानमेव शाब्दानुमितिहेतुरस्तु तस्यैव विरोधितयास्तु प्रकरणसमवायाभावा(?)सत्त्व-

मसिद्धेरिव परामर्शस्य, विलीयतां चाप्रसिद्धसाध्यकानुमानमिति चेत्। न। संशयासत्त्वकाले विना सिद्धिसिषाधयिषे अनुमित्यनुत्पादप्रसङ्गात्, सति परामर्शे संशयायोगादिति दिक् ॥



॥ इति हेत्वाभासप्रकरणम् ॥



अथ सदुत्तरास्फूर्त्तौ तदाभासेनापि पराहंकारशातनमित्यवसरतस्तद्व्युत्पादनप्राप्तौ जातेः स्वव्याघातकत्वेन जघन्यतया, छलस्य तात्पर्यतो दुष्टत्वेऽपि क्वाचिद्वचनतोऽदुष्टत्वेन किञ्चित्समीचीनतया, सदुत्तरास्फूर्त्तौ छलं वाच्यं, छलास्फूर्तौ जातिरिति विशेषण( ?=विशेष )ज्ञापनार्थं जातेः पूर्वं छलमुद्दिष्टमित्यादौ छलं लक्षयति—

## वचनविघातोऽर्थो(?=र्थविकल्पो)पपत्त्या छलम् ॥ न्या०सू०१।२।१०

अर्थस्य शब्दप्रतिपाद्यस्य विकल्पोपपत्त्या विरुद्धार्थकल्पनया वचनविघातो वचनदूषणं छलम् । तेन परतात्पर्याविषये शब्दतात्पर्यसंचारे दूषणवचनं छलमिति फलितम् । तात्पर्यसंचारेण दूषणवादितयैव छलवक्तुः पराजयः । न च यत्रानभिहितेऽभिहितत्वमनभि(?)हितेऽभि(?)हितत्वमारोप्य दूषणवचनं तत्राव्याप्तिरिति वाच्यम् । अननुभाषणविशेष एतस्यान्तर्भावेनालक्ष्यत्वात् ।

आचार्यास्तु काल्पितदूष्यं दूषणवचनं छलमिति नाव्याप्तिः । न च विशेषेष्वनन्तर्भावशङ्का, वाक्छलोपचारच्छलान्यच्छलस्य सामान्यच्छलत्वेन तत्रान्तर्भावादित्याहुः । इदं चतुर्थमेव छलं विभागसूत्रस्थचकारस्यानुक्तसमुच्चायकत्वादित्यन्ये । अथ यत्र नवकम्बलवत्त्वमित्यस्य नूतनकम्बलवत्त्वं नवसंख्याककम्बलवत्त्वं वा अभिप्रेतमिति विकल्प्य दूषणाभिधानं तदपि

छलं स्यादिति चेत् । न । तत्र तात्पर्यविषयेऽपि दोषाभिधानात् ।

विभजते—

तत्त्रिविधं वाक्छलं सामान्यच्छलमुप-
चारच्छलं च ॥ न्या०सू०१।२।११

त्रैविध्यमाह । वाक्छलमिति । अत्रोक्तिपूर्वकत्वात्तात्पर्यज्ञानस्यादौ वाक्छलं, तदनु सामान्यच्छलम्, उपचारस्य तात्पर्यज्ञानपूर्वकत्वादन्त उपचारच्छलमुक्तम् ॥

तत्र द्वयी छलगतिः । तात्पर्यमात्रसंचारः, पदार्थे तात्पर्यसंचारश्च । आद्यं सामान्यच्छलम् । यथा । सम्भवति ब्राह्मणे विद्यासंपदित्युक्ते ब्राह्मणत्वेन विद्यासम्पत्साधनमयुक्तं व्रात्ये व्यभिचारादिति वचनम् ।

अन्त्यं चतुर्द्धा । शक्यान्तरे प्रयुक्तस्य शक्यान्तरे संचारः । शक्ये प्रयुक्तस्योपच(?=चा)र्ये संचारः । उपचार्यप्रयुक्तस्य शक्ये संचारः । उपच(?=चा)र्यान्तरे प्रयुक्तस्योपच(?=चा)र्यान्तरे संचारः। तत्राद्यम्। गौर्विषाणीत्युक्ते कथमिषुर्विषाणीति वचनम्। द्वितीयम् । अग्निर्दाहक इत्युक्ते कथं माणवको दाहकः । तृतीयम् । मञ्चाः क्रोशन्तीत्युक्ते कथं काष्ठपुञ्जाः क्रोशन्ति । चतुर्थम् । गङ्गायां घोषः प्रतिवसतीत्युक्ते कथं गङ्गासम्बन्धिमकरादौ घोषः प्रतिवसतीति ।

अत्राद्यद्वयं वाक्छलं मुख्यवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूष-

णवचनस्य तत्त्वात्। मुख्यवृत्त्या प्रयुक्ते मुख्यवृत्त्यन्तरेण दूषण-वचनमेव वाक्छलमिति वर्द्धमानमते द्वितीयं सामान्यच्छल-मेव वाक्छलोपचारच्छलान्यच्छलस्यैव स(?=त)त्त्वात्। अत एव श्वेतो धावतीति श्वेतरूपविशिष्टाभिप्रायेणोक्ते श्वा इतो धाव-तीति शब्दान्तरकल्पनेन दूषणवचनमपि सामान्यच्छलम्। अत्र शब्दान्तरकल्पनेऽभिधान्तरकल्पनाया अपि सत्त्वम्। तदानुपूर्वीक इत्युक्त्वा(?) नातिप्रसङ्ग इति वाक्छलमुपचार-च्छलं वेदमित्यन्ये। अन्त्यद्वयमुपचारच्छलम्। उपचारवृत्त्या प्रयुक्ते वृत्तिमात्रेण दूषणवचनस्य स(?=त) त्त्वात्॥

ननु दूषकताबीजस्याभिप्रायारोपस्याभेदात् किं छलत्रैवि-ध्येनेति चेत्। शिष्यबुद्धिवैषद्यमात्राय। अशक्तिविशेषसूचकत्वेन भेदोक्तिरित्यप्याहुः॥

विभागरूपोद्देशक्रमेण वाक्छलं लक्षयति—

**अविशेषाभिहितेऽर्थे वक्त्रभिप्रायादर्थान्तर-कल्पना छलम्॥ न्या० सू० १।२।१२**

छलं वाक्छलं प्रकृतत्वात्। अविशेषाभिहितेऽनुपन्यस्त-विशेषेऽर्थे सति वक्त्रभिप्रायात् तदारोपादर्थान्तरकल्पनान-भिप्रेतार्थोद्भावनम्। तेन मुख्यवृत्त्या प्रयुक्ते वृत्तिमात्रेणार्था-न्तरे संचार्य दूषणवचनं वाक्छलम्।

तत्त्रिविधम्। धर्मिपदसञ्चाराद् धर्मपदसञ्चारदुभयपदा-

सञ्चाराच्च । तदपि प्रतिज्ञाहेतुदृष्टान्तभेदात्त्रिविधम् । तत्र प्रतिज्ञायां धर्मिपदसञ्चारो यथा । भूभृदयं समरप्रिय इत्यत्र भूभृति पर्वते साध्यं बाधितमिति । धर्मपदसञ्चारो यथा । अयमक्षरहित इत्यत्र द्यूतपराक्षपदस्येन्द्रिये सञ्चारः । उभयपदसञ्चारो यथा । भूभृदयं सैन्धववानित्यत्र राजाश्वपरे भूभृत्सैन्धवपदे पर्वतलवणपरतयासिद्धसाधनोद्भावनम् । हेतौ यथा । नवकम्बलवत्त्वादित्यत्र संख्यासञ्चारः । वैदिको द्विजत्वादित्यत्र द्विजपदस्य दन्तपरतयासिद्ध्युद्भावनम् । गुरुद्विजत्वादित्यत्र नायं वागीशो न वा दन्त इत्युभयपदसञ्चार इत्याद्यूह्यम् । एवं दृष्टान्तेऽपि साध्यसाधनोभयवैकल्यम् । अन्यपरतयोद्भावनात् त्रैविध्यम् । एवं दूषणादावपीति दिक् ॥

शब्दशक्त्युपजीवनादनन्तरं सामान्यच्छलं लक्षयति—

**सम्भवतोऽर्थस्यातिसामान्ययोगादसंभूतार्थकल्पना सामान्यच्छलम् ॥ न्या०सू०१।२।१३**

सम्भवतोऽर्थस्येति तात्पर्यसञ्चारे बीजम् । अतिसामान्ययोगादित्यारोपे बीजम् । असम्भूतार्थकल्पना तात्पर्याविषयार्थकल्पना । शक्त्युपचारापुरस्कारेण वक्तृतात्पर्याविषये शब्दतात्पर्यकल्पनया दोषवचनं सामान्यच्छलमिति फलितम् ।

तच्च पदवाक्यतात्पर्यसञ्चाराद् द्विविधमपि प्रत्येकं षड्विधम् । तद्यथा । सम्भवपरे नियमपरत्वं च सञ्चारः । सम्भव-

ति ब्राह्मणे विद्येत्यत्र नियमपरतया व्रात्ये व्यभिचारोद्भावनम्। नियमे सम्भवो यथा। यो धूमवान् स वह्निमानित्युक्ते सम्भवति क्वचिन्न तु व्याप्तिसिद्धिरिति। उद्देश्ये विधेयत्वस्य सञ्चारः। शब्दोऽनित्य इत्युक्ते नहि योऽनित्यः स शब्दः, घटादेरपि तत्त्वापत्तेः। एवं विधेय उद्देश्यत्वस्येत्यादि बोध्यम्॥

शब्दयुक्ति(?)तात्पर्योभयनिरूप्यत्वादुपचारस्यानन्तरं तं लक्षयति—

## धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्॥ न्या०सू०१।२।१४

धर्मः शब्दस्य प्रयोगस्तस्य विकल्पो द्वैविध्यं मुख्यत्वभाक्तत्वभेदात्। तेन निर्देशे वचन उभयथाप्रयोगसम्भवे भक्त्या प्रयुक्ते ऽर्थस्य पदार्थस्य सद्भावप्रतिषेधः प्रतिषेधवचनम्। तेन भक्त्या प्रयुक्तस्य वृत्त्यन्तरेणार्थान्तरे तात्पर्यसञ्चाराद् दूषणाभिधानमुपचारच्छलम्। उदाहरणं प्रागुक्तम्।

अस्यापि प्रतिज्ञाहेतुदृष्टान्ताश्रयतया भेदा द्रष्टव्याः। प्रतिज्ञायां यथा। माणवकः सिंह इत्युक्ते माणवके सिंहत्वं बाधितमिति। एवं पुरुषव्याघ्रो राजशार्दूल इत्यादौ द्रष्टव्यम्। हेतौ यथा। अयं देशो घोषवासयोग्यो गङ्गात्वादित्यत्र मुख्यतया विरोधोद्भावनम्। दृष्टान्ते यथा। अयं क्रोशनकर्ता भीतत्वा-

न्मश्ववदित्यत्र मुख्यतया साध्यसाधनोभयवैकल्योद्भावनमित्याद्यूह्यम्। अत्र लोकसिद्धलक्षणाया प्रयोगान्न वक्तुर्दोषः। स्वकल्पितलक्षणायामेव तद्दोषात्॥

छले कृते प्रत्युत्तरमेवम्। नवकम्बलवत्त्वादित्यत्र नूतनकम्बलवत्त्वं विवक्षितं नतु नवसङ्ख्याककम्त्रल(?=व)त्त्वमित्यसिद्ध्युद्भावने निरनुयोज्यानुयोगस्ते निग्रहस्थानम्। ननु वक्तुरेवायं दोषः किं न भवेन्नियतार्थकशब्दप्रयोगौचित्यादिति चेत्। न। प्रकरणादिना विशेषार्थबोधनसम्भवात्। यत्र च प्रतिवादिना तत्प्रयोगार्थाज्ञानेन दूषणदानं तत्राज्ञानमेव। न तु छलम्। तात्पर्याज्ञानेनान्यत्र संचारायोगादिति॥

अथ छलपरीक्षा। तत्र पूर्वपक्षसूत्रम्—

**वाक्छलमेवोपचारच्छलं तदविशेषात्॥**

**न्या० सू० १।२।१५**

तत्रोपचारच्छलं विषयः। तात्पर्यसंचारा(?=रात्)साधारणधर्मा(?=र्मात्) संशयः। प्रयोजनं प्रयोग उद्भावनसौकर्यम्। उपचारच्छलं वाक्छलाभिन्नं वृत्तिसंचारमुखप्रवृत्तिकत्वात् वाक्छलवदिति पूर्वपक्षः। एवं सामान्यच्छलेऽपि छलत्वादभेदः साधनीयः॥

अत्र सिद्धान्तसूत्रम्—

**न तदर्थान्तरभावात्॥ न्या० सू० १।२।१६**

नायं पूर्वपक्षः छलानां वैलक्षण्यस्य प्रागुक्तत्वात् । न च तात्पर्यारोपस्य दोषबीजत्वे वैलक्षण्यमकिञ्चित्करम् । अशक्तिविशेषोन्नयनस्य तत्फलत्वात् ॥

एवं भेदकसत्त्वेऽप्यभेदे विपक्षबाधकमाह—

**अविशेषे वा किञ्चित्साधर्म्यादेकत्वप्रसङ्गः ॥**

**न्या० सू० १।२।१७**

एवं किमपि न भिद्येतेति छलत्वादिना भेदोऽप्यनुपपन्नः स्यादिति भावः ॥

नन्वत्र छलपरीक्षा न युक्ता । सङ्गतिर्हि द्वेधा । अन्तर्भावलक्षणा बहिर्भावलक्षणा च । तत्राद्या अध्यायप्रतिपाद्यतावच्छेदकरूपा । अन्त्या प्रसङ्गादिषड्विधा । तत्राद्या नास्ति परीक्षाया अत्राध्यायेऽभावात् , नापि द्वितीया प्रसङ्गादेरभावादिति चेत् । न । शास्त्रे त्रिविधप्रवृत्त्या छललक्षणैः परीक्षायाः स्मरणेन प्रसङ्गसङ्गतेः सम्भवादिति ॥

॥ इति छलप्रकरणम् ॥



(१) Cp.—सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्वाहकैककार्यत्वे षोढा संगतिरिष्यते ॥

अथोद्देशक्रमसङ्गत्या पुरुषाशक्तिलिङ्गसामान्यलक्षणप्रकरणम् ।

तत्र प्रतिज्ञाहान्याद्यपेक्षयानुद्भटापराधतया जातेः प्रथमं तल्लक्षणाय सूत्रम्—

**साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥**

**न्या० सू० १।२।१८**

साधर्म्येण वैधर्म्येण च यत् प्रत्यवस्थानं प्रतीपमवस्थानं स्वप्रतिकूलकथनं सा जातिरिति । फलतः स्वव्याघातकमुत्तरं, स्वासाधकताप्रयोजकरूपेण परासाधकतासाधनं वा जातिरिति प्राप्तम् । एतद्गु( ? )पादानफलं स्ववाक्ये परिवर्जनं, स्वस्य सद्दूषणास्फूर्तेः( ?=तौ ) जात्या परव्यामोहनं, परवाक्य उद्भावनं च । सा च चतुर्विंशतिप्रकारा ।

तत्र प्रथमं साधर्म्यसमा ।

सा चैवं प्रयुज्यते । शब्दोऽनित्यः कृतकत्वादिति स्थापनायां, यदि घटसाधर्म्यात् कृतकत्वादनित्यत्वं तर्हि व्योमसाधर्म्यान्मेयत्वान्नित्यत्वं किन्न स्यादिति । इयं सद्विषया स्थापनायाः सम्यक्त्वात् ।

---

( १ ) Cp. न्या० सू० ५।१।१ः—

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥

शब्दो नित्यः श्रावणत्वात् शब्दवदित्यसत्स्थापनायां तु अनित्यसाधर्म्यात् प्रमेयत्वादनित्य एव किं न स्यादित्यसद्विषया ।

असत्स्थापनायामेवास्यां नित्यसाधर्म्याद्यदि नित्यस्तर्ह्यनित्यसाधर्म्यात् कृतकत्वादनित्य एव किं न स्यादितीयमसदुक्तिमात्रं हि दुष्टं न तु साधनम् । अत एवासत्स्थापनाविषयत्वध्रौव्येऽपि साधनस्य सतः कथनेऽप्युक्तिदोषमात्रादपि जातित्वमिति ज्ञापनायाकर इयमुक्ता ।

सद्दूषणास्फूर्तिः प्रौढिवादो वात्रावसरः । सत्प्रतिपक्षत्वमारोप्यम् । तद्भ्रान्तिः फलम् ।

एवं वैधर्म्येण स्थापनायामपि साधर्म्येण प्रत्यवस्थानं साधर्म्यसमैव । यथा अनित्यः शब्दः कृतकत्वात् , यन्नानित्यं तन्न कृतकं, यथा गगनमिति प्रयुक्ते, नित्यवैधर्म्यात् कृतकत्वाद्यद्यनित्यत्वं, नित्यसाधर्म्यान्मेयत्वान्नित्य( ?+त्व )मेव किन्न स्यादविशेषात् ।

तथा च—

**साधर्म्यवैधर्म्यान्यतरेण स्थापनायां नियममपुरस्कृत्य साधर्म्येण प्रत्यवस्थानं साधर्म्यसमेति[1] ॥**

सर्वासां जातीनामसाधकतानुमितौ स्वव्याघातकत्वमुद्धारप्रकारः ॥

( १ ) Cp. न्या० सू० ५।१।२ः—साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥

एवम्—

**निरुक्तस्थापनायामेव नियमापुरस्कारेण वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा ॥**

यथा शब्दोऽनित्यः कृतकत(?=त्वा·)द्घटवदिति प्रयुक्ते यद्यनित्यसाधर्म्यादनित्यस्तदानित्यवैधर्म्यात् श्रावणत्वान्नित्यः किन्न स्यादिति ।

एवं वैधर्म्येण स्थापनायामपि बोध्यम् ।

एते जाती प्रमाणाभ्यामपि बोध्ये । यथा शुक्लोऽयं शङ्खत्वादितरशङ्खवदिति प्रयुक्ते, नायं शुक्लः प्रत्यक्षेण पीतत्वेनोपलभ्यमानत्वात् । न चेत्प्रत्यक्षं बाधकमनुमानमपि साधकं न स्यादिति । नरास्थि यद्यनुमानाच्छुचि, आगमादशुचि किं न स्यादित्यादि ।

अत्र समबलत्वाभिमानात् सर्वत्र सत्प्रतिपक्षत्वमारोप्यं दुष्टत्वमूलं सर्वजातिसाधारणम् । व्याघातादसाधारणम् । युक्ताङ्गहीनत्वं युक्तस्याङ्गस्य व्याप्तेर्हानात् । अयुक्ताङ्गाधिकत्वं च साधर्म्यवैधर्म्ययोरयुक्तयोरेवाङ्गत्वात् ॥

ततः—

**साध्यसाधनान्यतरसहचारमात्रेण पक्षेऽविद्यमानधर्मासञ्जनमुत्कर्षसमा ॥**

पक्षेऽसतो धर्मस्य पक्षवृत्तिधर्मसहचरितस्य साह-

---

१ Cp. न्या०सू०५।१।४:—साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥

चर्यमात्रपुरस्कारेण पक्ष आपादनं वा ॥

यथा शब्दोऽनित्यः कृतकत्वादित्युक्तेऽनित्यत्ववति कृतकत्ववति घटादौ रूपवत्त्वं क्रियावत्त्वमश्रौत्रत्वं च दृष्टमिति शब्देऽपि तत्स्यादविशेषात् । एवं क्षित्यादिकं सकर्तृकं कार्यत्वादिति घटादौ शरीरिकर्तृकत्वं दृष्टमिति पक्षेऽपि तथा स्यादविशेषात् ।

तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुरिति दृष्टान्ते घटादौ रूपादिनाऽपाद्येन साध्यसाधनादेः सहोपालम्भोऽस्या उत्थानबीजम् । हेतुर्दूष्यः । प्रतिकूलतर्कप्रतीघातो विशेषविरोधो वारोप्यः । वादिनि मध्यस्थे वा भ्रान्तिः फलम् । व्याघातापत्त्या व्याप्त्या व्याप्त्यपुरस्कारेण युक्ताङ्गहान्या वा जातिरियमुद्धर्त्तव्या ॥

सम्बन्धमात्रपुरस्कृतव्यापकत्वस्य धर्मस्य व्यावृत्त्या साध्यदृष्टान्तयोः सिषाधयिषितसाधनाभिमतधर्मान्यतराभावप्रसञ्जनमपकर्षसमा ॥

साध्यं पक्षः ।

सहचरितमात्रधर्मव्यावृत्तिनिबन्धनया सहचरितयत्किञ्चिद्धर्मव्यावृत्त्या परानिष्टप्रसञ्जनमपकर्षसमेत्यन्ये ॥

यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते घटः कृतकोऽपि नामूर्त्त इति शब्दोऽपि नामूर्त्तः स्यात् । यदि चामूर्त्तः स्यात् कृतकोऽपि न स्यात् ।

एवं दृष्टान्तेऽपि । यथा शब्दः कृतको नीरूपो दृष्ट इति घटोऽपि नीरूपः स्यात् । एवमनित्येऽपि शब्दे यथा रूपवत्त्वं नास्ति तथानित्येऽपि घटे रूपवत्त्वं न स्यात् । तदानित्यत्वं मा भूत् । तथा च साध्यविकलो दृष्टान्तः । एवमीश्वरानुमाने कर्तृव्यापकशरीरव्यावृत्त्या कर्तृव्यावृत्त्यापादनम् ।

तदस्या व्यापकानुपलब्धिद्वारम् । हेतुर्दूष्यः । साध्यापकर्षे बाधः । साधनापकर्षे स्वरूपासिद्धिः । दृष्टान्ते साधनान्यतरापकर्षे तु दृष्टान्त एव दूष्यः । स्वव्याघातकत्वाद् व्याप्त्यपुरस्काराच्चेयमुद्धर्त्तव्या ॥

**दृष्टान्तवृत्तिसिद्ध्यनुगुणधर्मवत्तया गमकत्वमित्यभिमानेन दृष्टान्तस्य ख्यापनीयत्वापादनं वर्ण्यसमा ॥**

**यत्किञ्चिद्धर्मसाम्येन सपक्षस्य पक्षत्वापादनं वा ॥**

तद्यथा साध्यसिद्ध्यौपयिकसकलविशेषणशालिहेतुमत्तया घटो दृष्टान्तो न त्वन्यथा । तदौपयिकहेतुविशेषणानि च—असिद्धार्थत्वमाद्यम् । साध्यवत्तयानिश्चितवृत्तित्वरूपं समानविषयत्वं द्वितीयम् । साध्यसन्देहविषयवृत्तित्वरूपमनिश्चितसाध्यस्य ज्ञापनशक्तित्वं तृतीयम् । व्याप्तिग्राहकमानाविषयसाध्यस्य सामानाधिकरण्यं चतुर्थम् । हेतुस्वरूपं पञ्चमम् । तद्यदि घटोऽप्यसिद्धार्थहेतुमान( ?=-मान् ) तदा पक्ष इव साध्यवत्तया ख्यापनीयः स्यात् । न हि साध्यविकलो दृष्टान्तो नाम । अथ न तथा तदा हेतुमत्तया ख्यापनीयः स्यात् । नहि साधनविकलो दृष्टान्तः । एवं संशयविषयत्वादिविशेषणचतुष्टयेऽप्युदाहार्यम् ।

अस्याश्च पक्षे विवक्षितो हेतुविशेषो द्वारम् । दृष्टान्तो दूष्यः । स्वव्याघातकत्वादुद्धारः ।

**किञ्चिद्धर्मसाम्येन पक्षस्यापक्षत्वापादनमवर्ण्यसमा ॥**

यथा दृष्टान्ते यादृशो हेतुस्तादृश एव पक्षे वाच्यः । तथा च दृष्टान्तो यथा साध्यवत्तयेदानीं न वर्ण्यते तथा पक्षोऽपि स्यात् । यदि च पक्षे तादृशहेतुर्नोच्यते तदा स्वरूपासिद्धिरिति ।

अस्या हेतुर्दूष्यः । स्वव्याघातकत्वादुद्धारः ॥

**साध्यदृष्टान्तसम्बन्धिधर्मव्यभिचारबलेन हेतोर्व्यभिचारापादनं विकल्पसमा ॥**

**किञ्चिद्धर्मव्यभिचारदर्शनमूलकप्रकृतसाध्यव्यभिचारापादनं वा ॥**

तद्यथा । कृतकत्वं यथा रूपवत्त्वव्यभिचारि तद्वदनित्यत्वव्यभिचार्यपि स्यादिति ।

हेतुर्दूष्यः । व्यभिचार आरोप्यः । असाधकतानुमितौ स्वव्याघातकत्वमुद्धारप्रकारः । एवमन्यत्रापि ॥

**सिद्धानां तत्प्रयोगसाध्यत्वापादनं साध्यसमा ॥**

तद्यथा । यथा पक्षहेतुदृष्टान्तानां नैतदनुमानसाध्य(?+त्वं) तथा साध्यस्यापि स्यात् । यदि साध्यसाधकत्वं, तर्हि पक्षादिसाधकत्वमपि स्यादविशेषात् । तथा च स्थापनया पक्षादिसिद्धिस्तत्सिद्धौ स्थापनेत्यन्योन्याश्रयः । तथा च पक्षासिद्धावाश्रयासिद्धिः, हेत्वसिद्धौ स्वरूपासिद्धिः, दृष्टान्तासिद्धौ च व्याप्यत्वासिद्धिरित्यादितत्तद्दोषाभासेयम् ।

स्वव्याघातकत्वादुद्धारः ॥

कारकज्ञापकहेतुभेदेन प्राप्तिसमा द्विविधा ॥ एवमप्राप्तिसमापि[1] ॥

युगनद्धवाहिनी चैते जाती परस्परापेक्षत्वात् । तत्र साध्यप्राप्तिमात्रबलेनाविशेषापादनात् साधनदोषाभिधानं प्राप्तिसमा । साध्याप्राप्तिबलेनातिप्रसङ्गात् साधनदोषाभिधानमप्राप्तिसमा ।

तद्यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते लिङ्गज्ञानमनुमित्याप्राप्तं न जनकमतिप्रसङ्गादिति प्राप्तं वाच्यम् । सत्वा(?) च प्राप्यत इति कारणवदनुमितेः सत्त्वाविशेषात् कार्यकारणभावासम्भवः । एवं कार्यान्तरेऽपि कारणान्तरस्य बोध्यम् । किञ्च यथा गङ्गा सागरं गता न सागरभिन्ना तथा कारणमपि कार्याभिन्नं स्यादित्याद्यनेकविधा प्राप्तिसमा ।

अप्राप्तिसमा चैवम् । कारणं ज्ञापकं वा न कार्येण ज्ञाप्येन वा प्राप्तं वाच्यम् । तथा सत्यविशेषात्कारणत्वज्ञापकत्वयोरनुपपत्तेः । अप्राप्तस्य च न तत्त्वमतिप्रसङ्गात् । नह्यप्राप्तोऽग्निर्दहति, दीपो वा ज्ञापयतीति । द्वयोरपि हेतुर्दूष्यः ।

प्रतिकूलतर्कपराघातदेशनाभासे इमे । स्वव्याघातकत्वमुत्तरम् ॥

अनवस्थाभासप्रसङ्गः प्रसङ्गसमा[2] ॥

---

१ Cp. न्या० सू० ५।१।७:—प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥

२ Cp. न्या० सू० ५।१।९:—दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥

यथा यत्कारकं ज्ञापकं वा तत्कारकज्ञापकान्तराधीनम् । एवं तदपीत्यनवस्थायं(?=याम् ), तथा दृष्टान्तेऽपि दृष्टान्तो वाच्यः अन्यथा दार्ष्टान्तिकेऽपि तदपेक्षा न स्यात् । एवं हेतोरपि हेत्वन्तरं, तत्रापि तथेत्यसिद्धं न साधकम् ।

कृतिज्ञप्त्यन्वयिनी चेयं जातिः । अस्यामेव खाण्डनिकानां निर्भरः । तथाहि सत्तां साधयतः प्रमाणस्यापि सत्तासाधकं वाच्यम् । तेन विना तस्य सत्तायां तदन्तरेणापि सत्तासिद्धिः स्यादिति प्रमाणसत्तापि प्रमाणान्तराद्वाच्येत्यनवस्थाभासोदशमेयं(=देशनाभासेयम् ) । स्वव्याघातकत्वमुत्तरम् ।

**प्रतिदृष्टान्तप्रदर्शनमात्रेणापुरस्कृतहेत्वङ्गभावस्य प्रत्यवस्थानं प्रतिदृष्टान्तसमा[1] ॥**

यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते घटदृष्टान्तेन चेदनित्यत्वम् , आकाशदृष्टान्तेन नित्यत्वमपि स्यात् । हेतुरप्रधानं दृष्टान्तमात्रं साधकमित्यभिमानो जातिवादिनः ।

समबलतयोक्तौ सत्प्रतिपक्षस्याधिकबलतया सनु(?) बाधस्य देशनाभासेयम् । हेतुर्दूष्यः । स्वव्याघातकत्वं स्फुटम् ॥

**असदवस्थायां तदवृत्तित्वेन तदङ्गवैकल्योद्भावनमनुत्पत्तिसमा[2] ॥**

१ Cp. न्या० सू० ५।१।९:—दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥

२ Cp. न्या० सू० ५।१।१२:—प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥

सा च धर्मिहेतुसाध्यदृष्टान्ततज्ज्ञानानुत्पत्तिविकल्पेन पञ्चधा तत्राद्या यथा। शब्दोऽनित्य उत्पत्तिधर्मकत्वादित्युक्ते, शब्दस्यानुत्पत्तिदशायां हेतुरसिद्ध इति।

द्वितीया। इदं गुरु पतनवत्त्वादित्युक्ते, पतनोत्पत्तेः पूर्वं पतनशून्यस्य कथं पतनं धर्म इति व्याघातेनासिद्धिः।

तृतीया। इदं गन्धवत् पार्थिवत्वादित्युक्ते, आद्यक्षणे गन्धाभावात् पदार्थवत्त्वव्याघात इति व्यभिचारदेशना।

चतुर्थी। आत्मा द्रव्यं गुणवत्त्वाद् घटवदित्युक्ते, आद्यक्षणे निर्गुणो घटो न द्रव्यमिति व्याघातमुखेन साध्यवैकल्याभिधानम्।

पञ्चमी। वायुर्द्रव्यं स्पर्शवत्त्वादित्युक्ते, अज्ञातस्यापि वायोर्द्रव्यत्वं विवक्षितम्। तत्र च हेतुर्नोपलब्ध इति भागासिद्धिः।

उत्थानबीजमुत्पन्नानुत्पन्नादिसाधारणं पक्षादिकमिति भ्रमः। असाधकतानुमाने स्वव्याघातकत्वमुत्तरम्॥

**संशयसामग्र्येकदेशमात्रात्संशयापादनं संशयसमा[1]॥**

यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते, यथा कृतकत्वं साध्यस्य निर्णायकमस्ति तथा गुणत्वादिसंशायकमप्यस्ति। संशायके सति संशयानुत्पत्तौ निर्णायकान्निर्णयो न स्यादिति। स्वव्याघातकत्वमत्रोत्तरम्॥

---

१ Cp. न्या० सू० ५।१।१४:—सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः॥

**यत्किञ्चिद्धर्ममात्रेण बाधाभिधानं प्रकरणसमा[1] ॥**

यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते, श्रावणत्वान्नित्य एव शब्द इति बाधः । यदि श्रावणत्वं न बाधकं तदा कृतकत्वमपि न साधकमविशेषात् । एवं प्रत्यक्षादिभिरपि बाध उदाहर्त्तव्यः । यथा प्रत्यभिज्ञानान्नित्य एव शब्दः सिद्ध इति ।

बाधदेशनाभावमेयं (?=भासेयम्) । उत्थानबीजं धर्ममात्रे साधकत्वाभिमानः । स्वव्याघातकत्वमुत्तरम् ॥

**कालत्रये साधनानुपपत्त्या हेतोरसाधनत्वापादनमहेतुसमा[2] ॥**

**हेतुत्वाभिमतस्य समग्रसम्बन्धमात्रेण हेतुत्वविरोधापादनमहेतुसमेत्यन्ये ॥**

कृतिज्ञप्तिसाधारणीयम् । यथा कार्यकारणयोर्ज्ञाप्यज्ञापकयोर्वा सहभावेऽविशेषात् सव्येतरविषाणयोरिवाकारकत्वमज्ञापकत्वं त्वा (?=वा), पूर्वापरभावे पूर्वं साधनज्ञापकयोः स्वीकारे साध्यज्ञाप्ययोरपि प्राक्सत्त्वं, साधनत्वज्ञापकत्वयोः साध्यज्ञाप्यघटितमूर्त्तिकत्वादिति साध्यज्ञाप्यत्वानुपपत्तिरिति । असाधकतानुमितौ स्वव्याघातकत्वमत्रोत्तरम् ॥

---

१ Cp. न्या० सू० ५।१।१६ः—उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥

२ Cp. न्या० सू० ५।१।१८ः—त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥

**अर्थापत्त्याभासात् प्रत्यवस्थानमर्थापत्तिसमा ॥**

यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते, अर्थाल्लब्धं नान्योऽनित्य इति । विशेषविधेः शेषनिषेधफलकत्वात् । तथा च साध्यविकलो दृष्टान्तः । अनित्यसाधर्म्यादनित्य इत्युक्ते, अर्थाल्लब्धं नित्यसाधर्म्यान्नित्य इति प्रतिरोधः । अनुमानादनित्य इत्युक्ते, अर्थादापन्नं प्रत्यक्षान्नित्य इति बाधः । कृतकत्वं साधकमित्युक्ते, लब्धं नान्यत् साधकमित्यादिक्रमेण सर्वदोषदेशनाभासेयम् ॥

न च छलमिदम्, तात्पर्यारोपणस्यात्राभावात् स्वयमेव शब्दबललभ्यत्वापादनात् । अनुक्ताक्षेपो द्वारम् । उत्तरम्–नानुक्तमात्रमर्थादापद्यते, तर्हि तवासाधकतानुमानेऽपि तत्स्यादिति स्वव्याघातकत्वम ॥

**यत्किञ्चिद्धर्मदर्शनाद्यत्र क्वचिदविशेषापादनमविशेषसमा ॥**

यथा । यदि कृतकत्वरूपयत्किञ्चिद्धर्मात् शब्दघटयोरनित्यत्वरूपोऽविशेषस्तर्हि प्रमेयत्वेन त्रैलोक्यात्सर्वस्य सर्वधर्मणाविशेष इति सर्वस्य सर्वाभेदे पक्षसाध्यहेतुदृष्टान्तानामविशेष आश्रयासिद्धिसाध्य(?=ध्या-)विशेषादयो दोषा आपाद्याः । न चो-

१ Cp. न्या० सू० ५।१।२१:—अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥

२ Cp. न्या०सू० ५।१।२३:–एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः ॥

त्कर्षसमातोऽभेदः। तत्र विशिष्य यत्किञ्चिद्धर्मोत्कर्षादत्र तु सामान्यत इति विशेषात्। असाधकतानुमानेऽपि तदेवं स्यादित्युत्तरम्। युक्ताङ्गत्यागश्च सहचारमात्रेणापादनात्॥

**यत्किञ्चिद्धर्मबलेन स्वपक्षसाधनोपपादनात् प्रत्यवस्थानमुपपत्तिसमा[1]॥**

**परपक्षसाधनबलेन स्वपक्षसाधनोपपादनाद् दूषणाभिधानं वा॥**

यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते, यद्यनित्यत्वे प्रमाणमस्ति त्वदुक्तत्वात् तदा नित्यत्वेऽपि किञ्चित्प्रमाणं भवेन् मदुक्तत्वादिति प्राञ्चः।

नव्यास्तु त्रयोविंशति(?) जातित्वमुपपत्तिसमत्वम्। तेन पक्षः साध्याभावातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वात्, अयं हेतुः साध्यव्यभिचारी पक्षवृत्तित्वान्मेयत्ववदित्यादिसत्प्रतिपक्षव्यभिचारादिसकलदोषदेशनाभासेयम्। किञ्चिदुपाधिर्भविष्यतीति शङ्काग्रस्तत्वादित्यादेश्च सङ्ग्रह इत्याहुः।

इयमेव जातिर्वैतण्डिकानां सर्वस्वम् उद्धारोऽस्या युक्ताङ्गहीनत्वेनैवम्। सर्वविचारोपप्लवः स्यादिति त्वदुक्तसाधकतानुमानमपि दुष्टं स्यादिति स्वव्याघातकत्वम्॥

**प्रयोजकावधारणदूषणेन प्रत्यवस्थानमुपलब्धिसमा[2]॥**

---

१ Cp. न्या०सू० ५।१।२५:-उभयकारणोपपत्तेरुपपत्तिसमः॥

२ Cp. न्या०सू० ५।१।२७:-निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः॥

**अश्रूयमाणावधारणविकल्पमुखेन प्रत्यवस्थानं वा ॥**

यथा पर्वतो वह्निमान् धूमादित्युक्ते किं पर्वत एव वह्निमान्, पर्वतो वह्निमानेव (?+वा) । नाद्यः । महानसादीनामपि वह्निमत्त्वात् । नान्त्यः । वह्निशून्यस्यापि पर्वतस्य सत्त्वात् । एवं धूमादित्युक्ते, किं धूम एव पर्वते, तत्पर्वतत्वावच्छेदेन धूमः (?+वा)। नाद्यः । वृक्षादेरपि सत्त्वात् । नान्त्यः । निर्धूमस्यापि पर्वतस्य सत्त्वात् । एवमन्यत्रापि बोध्यम् ।

साध्यनिर्देशः प्रतिज्ञा(न्या०सू०१।१।३३) इति लक्षणे दिङ्नागेनेयमेव जातिः सञ्चारिता । प्रतिज्ञैव साध्यनिर्देशः, साध्यनिर्देश एव वा प्रतिज्ञेत्यादि ।

स्वव्याघातकत्वमत्रोत्तरम् ॥

**आत्मनि तदत्त्र(?=तदतद्-)रूपताविकल्पात् प्रत्यवस्थानमनुपलब्धिसमा[1] ॥**

इयं द्विविधा विषयिधर्मतदितरधर्मभेदात् । उपलब्धिपदेन विषयिणो धर्मा नञा(?=न) तदितर उपलक्ष्यन्त इत्येके । समुदायेनैव द्विविधा लक्ष्यन्त इति युक्तम् । तत्र विषयिधर्मा उपलब्ध्यनुपलब्धी, इच्छानिच्छा, द्वेषाद्वेषौ, कृत्यकृती, शक्त्यशक्ती, उत्पत्त्यनुत्पत्ती, व्यवहृत्यव्यवहृती इत्यादयः । अनुपलब्ध्यादेरपि परम्परया विषयित्वम् । अनिष्टिसमादीनामाकरोक्तानामन्यत्रासमावेशादत्रान्तर्भावो युक्तः । अन्यथाधिक्यापत्तेः ।

---

१ Cp. न्या०सू० ५।१।२९:-तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥

यथा भूतलं घटवत् तद्वृत्त्योपलब्धेरित्युक्ते, उपलब्धिरुपलब्धिरूपेण स्वस्मिन् वर्त्तते न वा। आद्ये, इयमप्युपलब्धा स्याद् विषयवत्। अन्त्ये, आत्मनि स्वरूपेणावृत्तेर्नासावुपलब्धिः।

यथा वा उपलब्धं लिङ्गादि सिद्ध्यङ्गमिति तदर्थं हेतुप्रयोगः। तत्रोपलब्धिर्यत्र स्वरूपेण वर्त्तते तदुपलब्धम्। तदियं स्वस्मिन् वर्त्तते चेदुपलब्धत्वेन विषयवन्नोपलब्धिः। न वर्त्तते चेत्तथापि नोपलब्धिरिति कथं तद्विषयत्वेन हेतोरुपलब्धत्वमिति व्यर्थः प्रयोगः।

एवमनुपलब्धिः स्वात्मनि स्वरूपेण वर्त्तते चेद्विषयवन्नानुपलब्धिः। न वर्त्तते चेत्तथापि नानुपलब्धिरिति कथमनुपलब्धेर्हेतुत्वम्। अथ स्वरूपेणात्मनि वृत्तावप्यनुपलब्धा न वा। नास्ति तदा विषयो नानुपलब्धो न वा। न स्यादित्यनैकान्तिको हेतुः।

एवमिच्छा स्वरूपेणात्मनि वर्त्तते चेद्विषयवदिष्टत्वान्नेच्छा। न वर्त्तते चेत् स्वरूपेणासत्त्वान्न स्यादेव। एवमनिच्छाकृतिद्वेषेष्वपि बोध्यम्।

एवं पर्वतो वह्निमान् धूमादित्युक्ते, पर्वतः स्वरूपेण स्वस्मिन् वर्त्तते चेदात्माश्रयः। प्रमेयत्वादौ तु प्रामाणिकत्वात् स न दोषः। नेति चेन्नासौ पर्वतः। नहि स्वात्मन्यपर्वतः पर्वतो विरोधात्। एवं साध्यहेतुदृष्टान्तेषु तदतद्विकल्पात् प्रत्यवस्थेयम्।

तदस्याः तदतद्रूपत्वानुपपत्तिर्मूलम्। प्रयोगमात्रं दूष्यम्। प्रतिकूलतर्क आरोप्यः। स्वस्मिन् स्वस्यावृत्तावपि न स्वात्म-

कत्वव्याघातः । अनुपलब्ध्यादिकं तु ध्वंसादिरूपं स्वस्मिन्न वर्त्तते, अत्यन्ताभावरूपं वर्त्तत एवेति। स्वव्याघातकत्वं चोत्तरम्॥

**वाग्युक्तप्रयोजकसामान्यमात्रेण विपक्षाभिमतस्य साध्यवत्त्वप्रपञ्चनमानित्यसमा[1] ॥**

केवलान्वयिनि विपक्षाभावेऽपि विपक्षारोपादियं प्रवर्त्तते । शब्दोऽनित्यः कृतकत्वाद्घटवदित्युक्ते, यदि घटसाधर्म्यात् कृतकत्वादनित्यस्तदा घटसाधर्म्यादेव प्रमेयत्वात् त्रैलोक्यमनित्यं स्यात् । तथा यद्याकाशवैधर्म्यादनित्यः शब्दस्त्रैलोक्यं तर्हि ततोऽनित्यं स्यात् ।

एवं यदि महानससाधर्म्याद् धूमाद्गिरिरग्निमांस्ततस्तत्सामान्यात् प्रमेयत्वात्सर्वमग्निमद्भवेत् ।

अविशेषसमा पक्षादीनामविशेषापादनरूपा, इयं तु साधर्म्यमात्रात्सपक्षत्वापादनरूपेति ततो विशेषः ।

प्रतिकूलतर्कत्वमारोप्यम् । स्वव्याघातकत्वमुत्तरम् ॥

**प्रकृतविवक्षितधर्मस्य यत्किञ्चिद्विरुद्धरूपाविकल्पद्वारा वा(?) धर्मिणि तद्वैशिष्ट्यखण्डनेन प्रत्यवस्थानं नित्यसमा[2] ॥**

इयं द्विनाम्नी नित्यसमा उपरञ्जकधर्मसमा चेति उपरञ्ज-

---

१ Cp. न्या० सू० ५।१।३२ः—साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥

२ Cp. न्या० सू० ५।१।३५ः—नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥

कधर्मखण्डनद्वारकत्वात् । तेन नित्यत्वानित्यत्वसत्यत्वासत्यत्व-भिन्नत्वाभिन्नत्वसत्त्वासत्त्वस्थिरत्वास्थिरत्वादयस्तद्विशेषाः स-न्दिग्धत्वासन्दिग्धत्वादयश्च संगृह्यन्ते ।

यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते, साध्यमनित्यत्वम नित्यं नित्यं वा । आद्ये, अनित्यत्वधर्मनाशाच्छब्दो नित्यः प्राप्तः । अन्त्ये, धर्मस्य नित्यत्वे धर्मिणः शब्दस्यापि नित्यत्वं भवेत् । नहि विना धर्मिणं धर्मस्थितिः ।

तथा शब्दः सत्योऽसत्यो वा । सत्यश्चेत्सत्यतायोगादन्यथा वा । चरमे विरोधः । आद्ये, सत्यता सामान्यमन्यद्वा । नाद्यः । सामान्यादेरसत्यतापत्तेः । अन्यच्चेत्तदपि सत्यमसत्यं वा । सत्यं चेद्भिन्नसत्यतायोगादभिन्नतद्योगाद्वा । भेदेऽनवस्था, अभेदे स्ववृत्तिताविरोधः । असत्यत्वे त्वाश्रयासिद्धिः ।

एवमनित्यत्वं शब्दाद् भिन्नमभिन्नं वा । अन्त्ये, धर्मधर्मि-भावानुपपत्तिः । आद्ये, भेदान्तरयोगाच्चेदनवस्थां( ?=स्था, स्व )तश्चेदात्माश्रयः । तथा च पक्षसाध्ययोरेकतराभावे आ-श्रयासिद्धिः साध्याप्रसिद्धिर्वा ।

एवं साध्यसाधने भिन्ने न वा । अन्त्ये, साध्याविशेषः । आद्ये, भेदो न स्वरूपं सहप्रयोगानुपपत्तेः । भिन्नेऽभेदभ्रमानुप-पत्तेः । दूरादुभयदर्शने संशयानुपपत्तेश्च । नातिरिक्तोऽनवस्था-पत्तेः । अतो न वैधर्म्यमपीति ।

तथा शब्दत्वं पक्षे विशेषणमुपलक्षणं वा । आद्ये, शब्द-

त्वस्यानित्यतापत्तिः । अन्त्ये, धर्मिमात्रस्योपलक्ष्यत्वे सिद्ध-साधनम् ।

तथा त्वत्साधनेन सदसद्वा जन्यते । अस(?=स)च्चेत्कारणवैयर्थ्यम् । असच्चेदसत्त्वं स्वरूपं धर्मो वा । आद्ये, असतः स्वरूपाभावः । अन्त्ये, भिन्नकालेनासत्त्वेन शब्दादेः सम्बन्ध-विरोधः ।

तथा नेदं जगत् स्थिरं स्वस्वकार्यस्य क्षेपानुपपत्तेः । न क्षणिकं क्षणिक( ?+त्व )स्यैवाक्षणिकत्वात् । तत्क्षणिकत्वे तन्निवृत्तौ विश्वस्याक्षणिकत्वापत्तेः ।

वेदान्तिनां चार्वाकादीनां चास्यामेव जातौ निर्भरः । इयमापाततः प्रतिकूलतर्कदेशनाभासा । पर्यन्ते बाधादिदेशनाभासा । हेतुर्दूष्यः । उत्तरं क्वचिदनवस्थायां प्रामाणिकत्वं, क्वचिद्धर्मधर्मिभावे स्वभावः । तदुक्तम्—संविदेव भगवती वस्तूपगमे शरणमिति । स्वव्याघातकत्वं च – इदमसाधकमित्यत्रासाधकत्वमनित्यं नित्यं वा । आद्ये, तद्विगमे साधकत्वापत्तिः । अन्त्ये, नित्यानित्यसम्बन्धविरोध इत्यादिकमूह्यम् ॥

**वाद्युक्ते दोषमाशङ्क्य तत्परीहाराय स्वोत्प्रेक्षित-प्रमाणदूषणेन वाद्युक्तसाधनासामर्थ्यप्रसञ्जनं कार्यसमा[1] ।**

पक्षहेतुदृष्टान्तेषु यस्य कस्यचिदसिद्धत्वमुद्भाव्य तत्साधक-

---

[1] Cp. न्या०सू० ५।१।३७:-प्रयत्नकार्यानेकत्वात्कार्यसमः

तया किञ्चित्स्वयमुत्प्रेक्ष्य तद् दूषयित्वा वाग्गुक्तसाधनासाधकत्व-वर्णनं कार्यसमेति फलितम् ।

यथा पर्वतो वह्निमान् धूमादित्युक्ते, धूमवत्त्वमात्रे इन्धनेन (?=मार्द्रेन्धनेन) साध्यम्, आर्द्रेन्धनमप्यासिद्धम् । एवं, शब्दे कार्यत्वं प्रयत्नोत्तरमुत्पत्त्या साध्यम्, उत्पत्तिरेवासिद्धेति । एवं, शब्द एवासिद्धस्तत्साधकं प्रत्यक्षं वाच्यम्, तद् भ्रान्तिरिति ।

न च प्रमाणतयोपन्यस्ते प्रमाणान्तरगवेषणात् प्रसङ्गसमेयम् । तस्या अनवस्थापर्यवसायित्वात्, तत्र किं प्रमाणं तत्र च किमिति जिज्ञासापरस्प(?=म्प)रारूपत्वाच्च । अत्र त्वाशङ्कितप्रमाणस्य दूषणेन पर्यवसानमिति । अत एव न छलत्वाशङ्का । तात्पर्यसञ्चारं विना स्वयमेवाशङ्क्य दूषणात् । कीर्त्तिस्तु पक्षे कण्ठताल्वाद्यभिघातेन कार्यत्वं, दृष्टान्ते तु मृद्दण्डादिनेति सम्बन्धिभेदाद्भेदोक्तिः कार्यसम इत्याह । तथा च दृष्टान्तवृत्तिलिङ्गात् पक्षवृत्तिलिङ्गमन्यदिति व्याप्त्यग्रहादसिद्धिरिति । स्वव्याघातकत्वमत्रोत्तरम् ॥

अथान्या अपि जातिभेदा उपलभ्यन्ते । यथा विकल्पसमाव्यतिरेकेणाविकल्पसमा । यथा जीवच्छरीरं न निरात्मकं प्राणादिमत्त्वादित्युक्ते, यथा प्राणादिमत्त्वतदभाववलक्षणवैधर्म्येऽपि जीवच्छरीरघटयोर्न सदसत्त्वविकल्पस्तथा सात्मकत्वतदभावविकल्पो न स्यादिति । सेयमविकल्पसमा ।

एवं साध्यसमाविपर्ययेणासाध्यसमा । यथा पक्षधर्मदृष्टान्तधर्मयोस्तुल्यत्वे न्यायासाध्यत्वप्रसङ्गः ।

एवं प्रसङ्गसमाविपर्ययादप्रसङ्गसमा । यथा प्रमाणेष्वनवस्थाभयात्प्रमाणं विना सिद्धिः । एवं प्रमेयेष्वपीति । एवं प्रत्यक्षादिसमाः । प्रत्यक्षाद्यन्तराद्वैपरीत्यमेव कुतो न स्यादित्यादिवत् । सत्यम् । अन्यत्रानन्तर्भावेऽन्तत उपपत्तिसमायामन्तर्भावादिति दिक् ॥

परेण जातौ प्रयुक्तायामपि सदुत्तरमेव प्रयोक्तव्यं तदैव कथाफलव्यवस्थितेः, अन्यथा तु नेति ज्ञापनाय कथाभास उक्तः। तत्त्वं च वादिप्रतिवाद्युभयाज्ञत्वप्रतिपत्तिफलककथात्वम् । तच्च षट्पक्षीय(?=पक्षी)वत्त्रिचतुःपञ्चपक्षीयेऽ(?=पक्षीष्व)प्यस्ति जातिभिरेवोत्तरप्रत्युत्तरादिक्रमेण ।

सा चैवम्—

शब्दोऽनित्यः कार्यत्वाद्घटवदिति सत्प्रयोगे, ऐन्द्रियकत्वाद्घटवदित्यसत्प्रयोगे वा, घटसाधर्म्यादनित्याद्( ?=अनित्यवद् ) आकाशसाधर्म्यादस्पर्शत्वान्नित्य एव किं न स्यादिति साधर्म्यसमः।

तर्हि अस्पर्शमाकाशं नित्यं परममहद् दृष्टमिति शब्दोऽपि नित्यः परममहांश्च भवत्वित्युत्कर्षसमः ।

अथ यथाकाशदृष्टान्तेन महत्त्वं तथा रूपदृष्टान्तेन तदनित्यं किं न स्यादिति प्रतिदृष्टान्तसमः ।

ननु निःस्पर्शं रूपादि किञ्चिदश्रावणं, शब्दादि च श्रावणम् । य( ?=त )था गगनादि नित्यं, शब्दाद्यनित्यं स्यादिति विकल्पसमः ।

अथ कार्यत्वमैन्द्रियकत्वं वा साध्यमप्राप्य न साधयेदति-

प्रसङ्गादिति प्राप्य वाच्यम् । तथा चाविशेषात् किं कस्य साधकं साध्यं वेति प्राप्तिसमः ।

इति षट् पक्षाः । ततो मध्यस्था( ?+दि )भिर्दोषोद्भावने कथानिवृत्तिः । चतुर्थादिकक्षायामुद्भावने त्रिपक्षा( ?=क्ष्या )दि ।

नन्वेवं तृतीयायामुद्भावने द्विपक्षी, अष्टम्यादौ सप्तपक्ष्यादिकमपि स्यादिति चेत् । न । सत्साधनोपक्रमायां प्रतिवादिना सदुत्तरमेव वाच्यम् । सदुत्तरासम्भवात्तावता तवा( ? )ज्ञत्वम् । तथा च तृतीयकक्षायां वादिना निरनुयोज्यानुयोगादिसदुत्तराभिधाने सत्कथैव । असदुत्तराभिधाने तु तत्रापि चतुर्थ्यां प्रतिवादिना सदुत्तरसम्भवेऽप्यसदुत्तरस्यैवाभिधाने मध्यस्थेन तस्य पर्यनुयोज्योपेक्षणोद्भावने द्वयोरप्यसुज्ञत्वम् । मध्यस्थस्य कथकत्वाभावेन माध्यस्थ्यरक्षार्थं वादिप्रतिवाद्यनुविधेयनियोगापेक्षयानुद्भावने, पञ्चम्यां षष्ठ्यां वोद्भावने पक्षवृद्धिः । एवं कदाचित्सप्तपक्ष्यादिकमपि । कथोपक्रम एव मध्यस्थस्य नियोगाकरण इदं बोध्यम् ।

असत्साधनोपक्रमायां तु जात्या द्वितीयपक्षोत्तरं मध्यस्थेन पर्यनुयोज्योपेक्षणोद्भावने द्वयोरज्ञत्वप्रतिपत्तिर्भवत्येव । किन्त्वनुग्रहेण, वाद्युक्तत्वप्रतिपत्त्यर्थं वा, समयबन्धापेक्षया वा, वादिना निरनुयोज्यानुयोगोद्भावने तस्य जयः स्यादिति तत्फलखण्डने माध्यस्थ्यहानिभयेन वा, तदनुद्भावने पक्षवृद्धिः ।

षट्पक्षाद्युत्तरमपि मध्यस्थेन पर्यनुयोज्योपेक्षणानुद्भावने मध्यस्थस्यैवासुज्ञत्वप्रतिपत्तिः ।

षट्पक्षोत्तरं मध्यस्थेन न क्षन्तव्यमिति कथम् (?) सम्प्रदाय-सिद्धेः षट्पक्ष्येवेत्यन्ये।

यद्यपि मध्यस्थकृतदोषोद्भावनस्य न कथान्तर्भावस्तस्य कथाफलाभागित्वेनाकथकत्वात्, तथापि समयबन्धादेव तेनो-द्भाव्यत इति वादे तु तृतीयकक्षायां प्रतिवादिनासदुत्तरोक्तौ वादिनैव तृतीयकक्षायां स्वदोषोद्भावनम्। सत्साधनोपक्रमायां तु प्रतिवादिनो निरनुयोज्यानुयोगोद्भावनम्। तत्त्वबुभुत्सुत्वादसु-ज्ञत्वप्रतिपादनस्यानुद्देश्यत्वादेवागतमध्यस्थादरे तेनाप्युद्भाव्यम्। नियमबन्धरक्षार्थं षट्पक्षी त्वपेक्षणीयेत्यलं प्रपञ्चेन।

जातीनामधुना मान्द्यादज्ञानादप्यनादरः।
अतः कथंचित्सिद्धान्तादिङ्मात्रमिह दर्शितम्॥



इति जातिप्रकरणम्॥

अथ जातिविशेषलक्षणोत्तरं निग्रहस्थानविशेषलक्षणम्। यद्यपि छलजाती अपि निग्रहस्थाने तयोर्निरनुयोज्यानुयोगविशेषत्वात्, तथापि निग्रहस्थानत्वसाक्षाद्व्याप्यविशेषलक्षणमधुना कार्यम्। छलत्वादिकं तु तद्व्याप्यनिरनुयोज्यानुयोगत्वव्याप्यम्। विशेषलक्षणाभिधानं च विभागवाक्याधीनधर्म्युपस्थितौ तज्जिज्ञासायाम्। विभागवाक्यं च सामान्यलक्षणज्ञानोत्तरमिति तल्लक्षणाय सूत्रम्--

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्॥

न्या०सू०१।२।१९॥

विप्रतिपत्तिर्भ्रमः। अप्रतिपत्तिरज्ञानम्। अनयोरन्यगतयोरुद्भावनायोग्यतया विभागसूत्रस्थप्रतिज्ञाहान्याद्यसङ्ग्रहापत्त्या च तदुन्नायकप्रतिज्ञाहान्यादिपरमेतत्।

निग्रहस्थानत्वं च कथकोद्देश्यकथाफलप्रयोजककथाहेतुयथार्थज्ञानविरहलिङ्गत्वम्। यत्र प्रकृतविषययथार्थज्ञानवतः सभाक्षोभादननुभाषणम्, अनूद्य वाप्रतिभा तत्र कथाफलोपधायकज्ञानाभावोऽस्त्येवेति नाव्याप्तिः॥

तानि च—

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञाता-

**र्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ न्या०सू०५।२।१ ॥**

स्वकार्ये परस्परनैरपेक्ष्यसूचनाय वक्ष्यमाणप्रतिबन्धक(?)वैधर्म्यसूचनाय चासमासः। प्रतिज्ञाहानिवद्धेतुहानेः, प्रतिज्ञाविरोधवत् प्रतिज्ञोदाहरणविरोधस्य च सम्भवेऽपि न विभागानुपपत्तिः, एष्वेव तदन्तर्भावात्। एषामुपाधीनां क्वचित्सांकर्येऽपि क्वचिदसांकर्यान्न दोषः।

अखण्डिताहंकारेण पराहंकारखण्डनमिह निग्रहः। स एतेषु वसतीति निग्रहस्थानम्। निग्रहोन्नायकमित्यर्थः। अत एव कथाबाह्यानामबाह्यानां चापस्मारोन्मादादिदशापन्नानां झटिति सम्वरणेन तिरोहितावसराणामनधिकृतोद्भावितानां च व्यवच्छेदः। न च कथाबाह्यानां प्रसक्तिरेव नेति वाच्यम्। अत एवातिव्याप्तेः सम्भवात्।

अत्र चकारोऽनुक्तदृष्टान्ताभासादिसमुच्चयार्थः॥

तत्र—

**स्वीकृतोक्तपरित्यागः प्रतिज्ञाहानिः ॥**[1]

---

[1] Cp. न्या०सू०५।२।२:—प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः॥

करणापाटवाद्युक्तव्यवच्छेदाय स्वीकृतेति । बुद्धिस्थत्या-गव्यवच्छेदायोक्तेति । न चानिग्रहस्थाने झटितिसंवरणेऽति-व्याप्तिः । झटितिसंवरणाभावे सतीति वाच्यत्वात् ।

प्रतिज्ञापदमत्रोपलक्षणम् । तेन पक्षसाध्यहेतुदृष्टान्ततद्विशेष-णत्यागादियं पञ्चधा ।

तत्र वाङ्मनसे अनित्ये इत्यत्र भागासिद्ध्युद्भावने, अस्तु तर्हि वागेवानित्येत्युक्ते पक्षहानिः ।

शब्दोऽनित्यः प्रत्यक्षत्वादित्यत्र सामान्ये व्यभिचारोद्भा-वने, अस्तु तर्हि नित्यत्वं साध्यमिति साध्यहानिः ।

अत्रैव रूपादौ व्यभिचारो(?+द्भावने)ऽस्तु तर्हि कृतक-त्वादिति हेतुरिति (?हेतु+)हानिः ।

शब्देऽनित्यत्वे साध्ये दृष्टान्तीकृते सामान्ये साध्यवैकल्येन दूषिते, अस्तु तर्हि नित्यत्वे साध्येऽदृष्टान्ते(?=दृष्टान्त)इति दृष्टान्ते साध्यहानिः ।

एवं दृष्टान्ते हेतुहानिपक्षसाध्यहेतुदृष्टान्तविशेषणहानय उदाहर्त्तव्याः ।

इयं तृतीयकक्षापातिनी चतुर्थादिकक्षोद्भाव्या । अनुद्भावने पर्यनुयोज्यापेक्षणकारिणी । उद्भाविता तु विजयहेतुः । न च पूर्वोक्ते दोषापाते हान्यनुपपत्तिस्तत्पाते तत एव निग्रहे किं हान्येति वाच्यम् । सर्पदष्टाङ्गुलीवद् दुष्टत्यागेन पूर्वनिग्रहपरीहारे हानेरेवोद्भाव्यत्वात् । प्रथमकक्षायामपि दोषदानभीतस्येयमा-पतति । परन्तु झटिति संवरणेन न तथा दोषाय । जल्पवित-

ण्डयोरियं सदसद्विषयाप्युद्भाव्या । वादे त्वसद्विषया सम्भावितापयुपेक्षणीया, तदुद्भावनस्य तत्त्वज्ञानानङ्गत्वात् । सद्विषया तूद्भाव्या, तदुद्भावनस्य तदङ्गत्वात् । जल्पवितण्डयोरुक्तं कथञ्चिन्निर्वाहयेत्, न तु त्यजेदिति रहस्यम् ॥

**प्रतिज्ञातार्थे दूषिते तत्प्रतिचिकीर्षया विशेषणान्तरप्रक्षेपेण पुनर्वचनं प्रतिज्ञान्तरम्** ॥

प्रतिज्ञार्थः साध्यभागः । साधनभागदूषणे तु हेत्वन्तरम् । तदेतत्पक्षतद्विशेषणसाध्यतद्विशेषणोक्तिभेदाच्चतुर्विधम् ।

वर्णा नित्याः श्रावणत्वादित्युक्ते, ध्वनौ व्यभिचार इति प्रत्युक्ते, सन्तु सध्वनय एव वर्णाः पक्ष इति पक्षोक्तिः । पक्षे च न व्यभिचारः ।

ननु यदि परेण ध्वनिरनित्य उच्यते तदापसिद्धान्तः, नित्यश्चेत्पर्यनुयोज्योपेक्षणेन गतार्थतेति चेत् । न । अङ्गीकृतशास्त्रार्थविरुद्धाभ्युपगम एवापसिद्धान्तः । यत्र तु शास्त्रमतिक्रम्य स्वयमेव ध्वनेर्नित्यत्वमभ्युपगम्यते तदा प्रतिज्ञान्तरसम्भवात् । क्षितिः सकर्तृकेत्यादौ वा साङ्कुरा क्षितिरित्युक्ते बोध्यम् ।

शब्दोऽनित्यः कार्यत्वादित्युक्ते, ध्वनौ सिद्धसाधने प्रत्युक्ते, अस्तु वर्णात्मकः शब्दोऽनित्य इति सिद्धसाधनव्युदासाय पक्षविशेषणोक्तिः । न चात्र ध्वनेः पक्षत्वत्यागात्(१), येन रूपेण स्वीकारस्तेनैव त्यागस्य प्रतिज्ञाहानित्वात् ।

---

१ Cp. न्या०सू० ५।२।३:—प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥

गिरिरग्निमान् सुरभिमलिनधूमवत्त्वादित्यत्र व्यर्थविशेषणत्वे प्रत्युक्ते, तन्निरासाय कृष्णागरुजन्याग्निमानिति साध्यान्तरोक्तिः।

क्षित्यादिकं प्रत्यक्षवत्कर्तृकमित्यत्र सिद्धसाधने प्रत्युक्ते, तद्व्युदासायोपादानगोचरेति साध्यविशेषणोक्तिः।

एवं दोषान्तरनिरासायापीदं प्रवर्त्तते। प्रतिज्ञाहानिवदस्य परिकरशुद्धिः। तत्र त्यागः, इह तु पूरणमिति विशेषः। एवं साध्यद्वयदृष्टान्तद्वयादावुदाहरणादौ विशेषणान्तरदानेऽप्येतद्बोध्यम्। उक्तं कक्षान्तरे न विशेषयेदिति रहस्यम्॥

## प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः॥

## न्या०सू०५।२।४॥

यथा द्रव्यं गुणभिन्नं गुणत्वेन प्रतीयमानत्वादिति। अत्र प्रतिज्ञा हेतुना विरुध्यते, परन्तु प्रतिज्ञाया बलवत्त्वं प्रमाणानुग्रहात्। क्वचिद्धेतोर्बलवत्त्वं बोध्यम्। एवमुदाहरणादिना विरोधोऽपि द्रष्टव्यः। तथा प्रतिज्ञाघटकपदयोरपि माता वन्ध्येत्यादौ।

व्याघातो विरुद्धार्थकत्वम्। तथा च विरुद्धार्थकपदवाक्यत्वं लक्षणम्[१]। न चैतद् वन्ध्या पुत्रत्वादिति हेतौ, यथा

[१] The language from व्याघातः to-लक्षणम् here shows that the above reading प्रतिज्ञाहेत्वोर्विरोधः—वन्ध्येत्यादौ is not the original one. The reading of ख, for which see below, is apparently more appropriate here.

बन्ध्यापुत्र इति दृष्टान्तशाल्युदाहरणेऽन्यत्रापि गतमिति वाच्यम्। तेषां लक्ष्यत्वेनादोषात्। प्रतिज्ञाहेतुपदेनोक्तिमात्रोपलक्षणात्। तेन दूषणाभिधानादावप्येतत्सम्भवः। एतेन माता बन्ध्येति प्रतिज्ञायां बाधो, हेत्वादौ हेतुविशेषणासिद्ध्यादिरिति तैर्गतार्थोऽयमित्यपास्तम्। तेषां हेतुदोषत्वादस्योक्तिमात्रदोषत्वात्। एतदुद्भावनेनैव निग्रहः, तत्र त्वसाधकतानुमानापेक्षा। अत एवैतदलाभ एव हेत्वाभासोद्भावनम्।

वस्तुतोऽत्र विरोधस्तदभावावच्छेदकत्वम्। तेन स्वक्रियाव्याघातादेरपि सङ्ग्रहः। तत्कार्यार्थमुपादानस्य तत्कार्यकारणशङ्कायाश्च मिथोविरोधादिति। प्रमादात् सभाक्षोभादितो वास्य सम्भवः। प्रथमकक्षादिपाती द्वितीयादिकक्षोद्भाव्यो वादेऽपि। अन्यथा तत्त्वप्रतिपत्तिव्याघातात्। मिथोव्याहतं न वदेदिति रहस्यम्॥

**यो येन रूपेण प्रतिपादितस्तस्य तेन रूपेणापलापः प्रतिज्ञासंन्यासः[१]॥**

प्रतिज्ञेत्युक्तिमात्रोपलक्षणम्। अन्यथा हेत्वादिसंन्यासस्यालक्ष्यत्वे तत्रातिव्याप्त्यापत्तेः। अथापलापस्य निग्रहस्थानत्वेन व्युत्पादने रोदनाद्यपि व्युत्पाद्यतामविशेषादिति चेत्। न। अपलापेन चौरादेरनिग्रहस्य लोके दृष्टत्वात्, न तु रोदनादिनेति विशेषात्।

---

१ Cp. न्या० सू० ५।२।५:—पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः।

स च पञ्चविधः। प्रतिपादनापलापात्। यथा (?+क) एव माहेति। प्रकारापलापात्। यथा परपक्षोऽयं मयोक्त इति। स्ववचने परकर्तृतासंचारात्। यथा स्वोक्ते त्वयेदमुक्तमिति। परोक्तौ स्वकर्तृकत्वसंचारात्। यथा परोक्ते मयेदमुक्तमिति। अनुक्ते स्वोक्तत्वसंचारात्। यथानुक्ते मयेदमुक्तमिति। न च प्रतिपादनापलापात् प्रथमपक्ष एवास्यान्तर्भावः। तर्हि सर्वेषामपि तत एव तदन्तर्भावापत्तेः। अवान्तरविशेषस्तु तुल्यः।

पञ्चविधोऽप्ययं विशेषणादिसंक्रमाद्बहुप्रकारः। वादेऽयं न बुद्धिपूर्वकः, तत्वबुभुत्सुतया सवलित(?)संगूहनाभावात्सदसद्विषयहानिवत्। अनुवादारूढं दूषणाक्रान्तं नापलपेदिति रहस्यम्॥

**उक्तसाधकभागस्य परदूषितस्यानुक्तविशेषणवत्तयाभिधानं हेत्वन्तरम्[१]॥**

विशेष्यस्यापि विशेषणोपरञ्जकत्वेन विशेषणपदार्थत्वान्नाव्याप्तिः। परोक्तदोषोद्धाराय प्रागनुक्तसाधकभागाभिधानं वा तत्।

तदिदं चतुर्विधम्। हेतुविशेषणात्, उदाहरणांशविशेषणात्, उपनयविशेषणात्, दूषणविशेषणाच्च।

तत्राद्यम्। शब्दोऽनित्यः प्रत्यक्षत्वादित्युक्ते, सामान्यव्यभिचारेण दूषिते, सामान्यवत्त्वे सतीति विशेषणात्।

---

१ Cp. न्या० सू० ५।२।६:—अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्।

द्वितीयम् । शब्दोऽनित्यः सामान्यवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वात् । यदस्मदादिबाह्यकरणप्रत्यक्षं तदनित्यमित्युक्ते, सत्यन्तन्यूनतया दूषिते, सत्यन्तविशेषणात् ।

तृतीयम् । तत्रैवास्मदादिबाह्यकरणप्रत्यक्षश्चायमित्युपनये तथैव दूषिते, सत्यन्तविशेषणात् ।

चतुर्थम् । हेतौ प्रयुक्ते, अयं हेतुरसाधकः सपक्षे सत्त्वादनित्यत्वे साध्ये प्रमेयत्ववदित्युक्ते, स्वव्याघातकत्वेन जात्युत्तरतया दूषिते, विपक्षगतत्वे सतीति विशेषणात् । एव विपक्षव्यावृत्तत्वादित्युक्ते, तथैव दूषिते, सपक्षव्यावृत्तत्वे सतीति विशेषणात् । एवमन्यत्रापि प्रतिज्ञान्तरवदस्य परिकरशुद्धिः ॥

**प्रकृतं साधनं दूषणं वोपक्रम्य तदनङ्गाभिधानमप्यर्था( ?=मर्था-)न्तरम् ॥**

तच्च स्वमतपरमतोभयमतोभयाननुमतभेदाच्चतुर्विधम् । तद्यथा शब्दोऽनित्यः कार्यत्वादिति प्रयुज्य स गुणश्चाकाशस्येत्यादि स्वमते प्रकृतानुपयुक्तभाषणादर्थान्तरम् । तथैव प्रयुज्य द्रव्यं शब्दः संयोगग्राह्य इत्यादि परमते । तथैव प्रयुज्य प्रमाणं चतुर्विधं षड्विधं च किञ्चिज्ज्ञातं किञ्चिदज्ञातमित्यादिकमुभयमते । तथैव प्रयुज्य हेतुरयं हेतुश्च हिनोतेर्धातोस्तुमुनि कृते कृदन्तं पदम्, पदत्वं च शक्तत्वमित्याद्युभयाननुमते ।

---

१ Cp. न्या० सू० ५।२।७:—प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरम् ॥

सत्यसति वा प्रयोगे परेण दोषदाने समाधानासामर्थ्यं स्वस्य ज्ञात्वा तत्तिरोधित्सयास्योक्तिसम्भवः ।

नन्वर्थान्तरं पूर्णे वाक्येऽपूर्णे वोद्भाव्यम् । अन्त्ये, न्यूनत्वेनैव निग्रहात्तदनुद्भावेन ( ?=वने ) पर्यनुयोज्योपेक्षणापत्तिः । आद्ये, अदुष्टे दुष्टे वा । अदुष्टे तु किमर्थान्तरमवतारयेत् । दुष्टे तु दोषमुपेक्ष्यर्थान्तरोद्भावने पर्यनुयोज्योपेक्षणापत्तिरित्यनवसर एवैतदुद्भावनस्येति चेत् । न । अदुष्टेऽपि स्वदोषस्य सतोऽसतो वा तिरोधित्सयैतदुक्तिसम्भवात् । नाप्यनवसरः । न्यूनादेस्तद्वादिन्युपरतवचसि दत्तावसरे चोद्भाव्यत्वात् । अन्यथा शब्दोऽनित्य इत्यर्द्धोक्तावेव न्यूनत्वोद्भावनापत्तेः ।

अर्थान्तरं तूच्यमान एवोद्भाव्यम् । न्यूनाद्यनुद्भावने च । न तदा पर्यनुयोज्योपेक्षणापत्तिः । उद्भावनावसरेऽनुद्भावन एव तत्सम्भवात् । न चार्थन्तरमपि कथमुच्यमानग्राह्यं, बहुतरमभिधाय वादी प्रकृतसङ्गतिं करिष्यतीति सम्भावनायाः सुलभत्वादिति वाच्यम् । एतावदेव वाच्यमिति समयबन्धेन विचारे तदसम्भवात् ।

अर्थान्तरमर्थान्तरेण परिहरतः किमुत्तरम् । न तावदर्थान्तरमेव, पुनस्तत्रापि तदुद्भावने जल्पाकस्यैव विजयापत्तेरिति चेत् । न । प्रागर्थान्तरोद्भावनैव (?= नयैव) पूर्वकथाविच्छेदेन मध्यस्थेन पराभवस्थापनात् । सिद्धसाधनस्य तु नात्रान्तर्भावस्तस्यानुमितिकारणविघटकत्वात् । प्रकृतोपयुक्तमेव वाच्यमिति रहस्यम् ॥

अवाचकपदप्रयोगो निरर्थकम्[1] ॥

अवाचकत्वं चानादिसिद्धवृत्तिशून्यत्वम्। तेन गङ्गादिपदस्य तीरादौ प्रयोगे न दोषः। स्वकल्पितलक्षणायां तु दोष एव। क्वचित्समयबन्धेन भाषया प्रयोगेऽपि न दोषः। एतच्च क्वचिल्लिङ्गविपर्यासात्। यथा शब्दमनित्यमिति। क्वचिद्वचनविपर्यासात्। यथा अनित्यः शब्दा इति। सिद्धवृत्तिकैत्येव(?) वक्तव्यमिति रहस्यम् ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमपि दुर्बोधमविज्ञातार्थम्[2] ॥

यथा पञ्चस्कन्धादिपदमाधिमात्रोपायादिपदं च। तच्छास्त्राभिज्ञयोर्विचारे न दोषः। यथा वा चन्द्रादिपदे प्रयोक्तव्येऽत्रिलोचनसम्भूतज्योतिरित्यादिप्रयोगः ॥

यत्काले यत्रैकवाक्यताप्रयोजकरूपाभावस्तत्काले तदपार्थकम्[3] ॥

तच्च द्विधा। पदवाक्यभेदात्। आद्यम्। गौरश्व इत्यादि। वाक्यापार्थकं च त्रिधा। अनाकाङ्क्षया, अयोग्यतया, अनासत्त्या च। आद्यम्। घटः कर्मत्वमित्यादि मुख्यं सदैवा-

---

१ Cp. न्या० सू० ५।२।८:—वर्णक्रमनिर्देशवन्निरर्थकम् ॥

२ Cp. न्या० सू० ५।२।९:—परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥

३ Cp. न्या० सू० ५।२।१०:—पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥

नन्वयात् । द्वितीयम् । वह्निना सिञ्चतीत्यादि । तृतीयम् । गच्छति पयसाऽश्वेन भुक्त्वा नगरं चैत्र इत्यादि ।

यत्तु गुणाद्यन्यत्वे सति सत्त्वादित्यपार्थकं सप्तम्यर्थाविरुद्धे पञ्चम्यर्थानन्वयादिति । तदसत् । सप्तम्यर्थसामानाधिकरण्यविशिष्टे पञ्चम्यर्थान्वयसम्भवात् । तथैव व्युत्पत्तेः । व्योमकमलं सुरभि पद्मत्वादित्यपार्थकमेवाश्रयासिद्धिसङ्कीर्णम् । न च प्रतिज्ञाविरोधेन गतार्थमिदम् । अयोग्यतादिकृतेऽस्मिन् तस्याभावात् । न चैवमनेन तद्गतार्थम् । तत्र विरुद्धार्थकत्वज्ञानेनैव दोषात्, अत्रान्वयबोधानुपधायकत्वज्ञानेनेति भेदात् ।

पदापार्थकं प्रतिज्ञाविरोधो, वाक्यापार्थकमपार्थकमित्यन्ये । प्रतिज्ञा( ?+या )मेव प्रतिज्ञाविरोधोऽन्यत्रापार्थकमेव, प्रतिज्ञापदस्योक्तिमात्रपरत्वे मानाभावादित्यपरे ॥

**उद्देश्यप्रतीतिप्रयोजनक(?)क्रमविपर्यासोऽप्राप्तकालम्[1] ॥**

तत्कालेऽनाकाङ्क्षिताभिधानं तदिति फलितम् । तदिदं चतुर्विधम् । पादपादान्त्या(?=पादा)वयवतदंशविपर्यासभेदात् ।

तत्र स्थापनाकण्टकोद्धाराभ्यामेकः पादः । तत्र स्थापनामकृत्वा कण्टकोद्धारे कृते कथापादांशविपर्यासः । प्राक्कण्टकोद्धारस्य निर्विषयत्वात् ।

परपक्षदूषणस्वपक्षस्थापनाभ्यां द्वौ पादौ । यदि स्वपक्षस्थापनां कृत्वा परपक्षोपालम्भं करोति तदा कथापादविपर्यासः । नह्यनिवार्य परिपन्थिनं स्वपक्षः साधयितुं शक्यते ।

१ Cp. न्या० सू० ५।२।११ः—अवयवविपर्यासवचनमप्राप्तकालम् ॥

ततस्तेन स्वपक्षे हेतुं प्रयुज्य तत्र हेत्वाभासनिरासः कार्य-इति तृतीयः । न हि परोक्ते दूषितेऽपि विना साधनं साध्य-सिद्धिः । चतुर्थस्तु कथायाः पादो जयादिव्यवस्थाफलतया निग्रहे नोपयुज्यत उत्तरकालीनत्वात् । इत्थं च तृतीये पादे यदि प्रथममेव हेत्वाभासानुद्धरति पश्चाद्धेतुं प्रयुङ्क्ते तदा पादां-शविपर्ययः ।

हेत्वाद्यवयवमुक्त्वा प्रतिज्ञाद्यभिधानेऽवयवविपर्यासः ।

साध्यमुक्त्वा पक्षनिर्देशेऽवयवांशविपर्यासः ॥

## हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ न्या०सू०५।२।१२

तच्च स्वसिद्धान्तसिद्धावयवेषु न्यूनाभिधानम् । यथा पञ्च-स्ववयवेषु कस्यचिदनभिधाने नैयायिकस्य न्यूनाभिधानम् । त्रिषु मीमांसकस्य । द्वयोः सौगतस्येत्यादि । एवं मात्रानुस्वार-हीनमपि न्यूनमवय(?=मेव) । तथा कथापादहीनं, पादांशहीनं, न्यायावयवहीनम्, अवयवावयवहीनं च ।

न चैवमपसिद्धान्तः सिद्धान्तातिक्रमादिति वाच्यम् । न हि स्वीकृतसिद्धान्तविरोध्यभिधानमात्रमपसिद्धान्तः । सभाक्षोभा-दिनापि विरोध्यभिधानसम्भवात् । किन्तु स्वीकृततन्त्रसिद्धा-न्तविरोध्यभ्युपगमः । अन्यथा सर्वनिग्रहस्थानानां तथात्वा-पत्तिः । क्वचित्सांकर्येऽप्यदोषः । यद्वा, यथा वस्तु यथा वा सिद्धान्तस्तथा वाच्यमिति नियमो वाद एवेति तत्रैवास्य

पातो,न जल्पवितण्डयोरपि । तथा च तत्रापसिद्धान्त एवा-स्यान्तःपातः ॥

## हेतूदाहरणाधिकमधिकम् ॥ न्या०सू०५।२।१३॥

तत्र हेत्वधिकम् । यथा पर्वतो (?+वह्निमान्) धूमादालो-काच्च । दृष्टान्ताधिकम् । महानसवद् गोष्ठवच्चेति । एवं दूषणा-धिकं बोध्यम् ।

न च नेदं निग्रहस्थानं विप्रतिपत्त्यप्रतिपत्त्यलिङ्गत्वादिति वाच्यम् । अनधिकोक्तेरेव प्रतिपाद्याकाङ्क्षिततया तस्या एव प्रतिपत्त्यङ्गत्वेनाधिकोक्तेस्तदङ्गत्वभ्रममूलकत्वात् । यदि च हेत्वाद्यन्तरे परिषज्जिज्ञासा, यथास्फूर्ति वक्तव्यमिति समय-बन्धस्तदा नायं दोषः ।

तदिदं द्वेधा । सामान्यतो विशेषतश्च । विशेषतः स्व-शब्देन । सामान्यतो धूमादेरिति महानसादिवदिति ।

अदूष्यांशानुभाषणेऽप्यधिकमित्यन्ये । सौगतस्य प्रतिज्ञा-हेतुनिगमनान्यतमावयवप्रयोगात् । मीमांसकस्योपनयनिगम-नान्यतरप्रयोगात् । नैयायिकस्य साधकतानुमान उदाहरणादि-प्रयोगादाधिक्यं द्रष्टव्यम् ॥

## शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ न्या० सू० ५।२।१४॥

तच्च शब्दपुनरुक्तार्थपुनरुक्तभेदाद् द्विविधम् । तत्र शब्दपु-

नरुक्तम् । शब्दोऽनित्योऽनित्य इति । अर्थपुनरुक्तम् । यथा वह्निरुष्ण इति । कण्टकोद्धारकृतः(?) अर्थायत्तपुनरुक्तं त्रिविधम् । यथा जीवन् गृहे नास्तीत्युक्त्वा बहिरस्तीति शङ्करमिश्रादयः । घटो घट इति शब्दस्य, घटः कलश इत्यर्थस्य, वह्निरुष्ण इत्यादिकम(?=मा)र्थस्य । पुनर्वचनं प्रतिपादनमिति तु युक्तमाभाति ॥

**स्वस्थेन स्थेयादिभिस्त्रिरुक्तस्याप्यननुवादोऽननुभाषणम्[1] ।**

स्वस्थेनेति वातरोगादिव्युदसाय । तदेतत्पञ्चधा । तदित्यादिसर्वनाम्ना, अन्यथानुवादेन, एकदेशानुवादेन[2], स्तम्भेन वा । यत्रानेकमनुवाद्यं तत्रैव सर्वनाम्नानुवादे दोषः । बहूनाम्प्रकृतत्वेन विशिष्य दूष्यांशानुवादायोगात् । स्तम्भस्थलेऽज्ञानाप्रतिभयोः क्वचित्सत्त्वेऽपि तयोरयोग्यतयोद्भावनं नोचितम् । किन्त्वननुभाषणस्यैव तद्युक्तम् । न च तयोः स्तम्भ एवोन्नायकः, स्फुरदुत्तरस्यापि कण्ठतया(?) सभाक्षोभेणाननुभाषणसम्भवात् । निश्चितानिश्चितयोर्निश्चितस्यैवोद्भावनौचित्यात् । न चाज्ञानविक्षेपयोरेतद्व्याप्यतापत्तिः, अनूद्याज्ञानाविष्कारे कथाविच्छेदे च तयोर-

---

१ Cp. न्या० सू० ५।२।१७—विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥

२ Probably 'केवलदूषणोक्त्या' or some similar expression has been omitted here; cp. Viśvanātha Nyāyapañcānana on Nyāya Sūtra V. 2, 17.

सांकर्यात् । स्थापनां सम्यग्विधायाज्ञानाविष्कारे कथाविच्छेदे च तयोरसंकर इति भास्करः ॥

## अविज्ञातं चाज्ञानम् ॥ न्या० सू० ५।२।१८

कथायां प्रकृतविषये वाग्युक्ते मध्यस्थावगते वारद्वयं तदन्यतरेणानूदितेऽपि स्वाज्ञानाविष्करणमज्ञानम् । वारद्वयमित्युपादानात् पुनरुच्यतामित्यादिनियोगे नातिव्याप्तिः । यत्र तु सकृदेव वाच्यमिति समयबन्धस्तत्रैतस्य लक्ष्यतेति बोध्यम् ।

तच्च न जानामि किमनेनोक्तमिति, भ्रान्तोऽहमस्मिन् विषय इति, विपरीतं मे ज्ञानमिति वा । अत एवाननुभाषणाद्भेदः । धारणावता शब्दमात्रानुवादेऽप्यर्थाज्ञानसम्भवाच्च ॥

## उत्तराप्रतिपत्तिरप्रतिभा[1] ॥

पर्युदासनञोत्तरावसरे तद्विरोधी, उत्तराप्रतिपत्त्युन्नायको वा कथकव्यापारोऽप्रतिभेति लब्धम् । स च व्यापारः खसूचनकेशसमारचनश्लोकपाठराजवार्तावतारणादिरूपो लोकप्रसिद्धः ।

अनुभाषणानन्तरमस्यावतार इति नात्राननुभाषणम् । नाप्यज्ञानं, तदा तस्य सन्दिग्धत्वात् । न विक्षेपः, व्याजेन कथाया अव(?=वि)च्छेदात् । नार्थान्तरम्, अप्रसक्तानुप्रसक्तेरभावात् ।

अनुभाषणोत्तरमवहितायां परिषदि वादिनि चोत्तरं श्रोतुकामे प्रतिवादी निरुत्तरः सर्वथाप्रतिभया निगृह्यते । अनधिकृतोद्भावितापीयं निग्रहाय । स्थापनाया असत्त्वे पर्यनुयोज्योपेक्षण-

---

1 Cp. न्या० सू० ५।२।१९:—उत्तरस्याप्रतिपत्तिरप्रतिभा ॥

सहचारिणीति प्राञ्चः। नव्यास्तु सत्साधनेऽपि तथा। यत्र बहूनि साधनान्यभिधेयानीति समयबन्धेन कथा तत्र साधनान्तरस्य सम्भवतोऽप्यप्रयोगे इत्याहुः।

अत्राचार्या अस्या अनुद्भावनेन पर्यनुयोज्योपेक्षणम्। अनुद्भाविताया अपि निग्रहस्थानत्वात्। यथायथं स्मितस्वेदादिना तद्व्यञ्जनात्। न च वागन्तरप्रयोगेण तिरोधानाच्च तेन व्यञ्जनम्, तत्प्रयोगेऽपि कथाविरामेण तिरोधानासंभवादित्याहुः। नैतद्युक्तम्, निग्रहस्थानान्तरवदनुद्भावने स्वशक्तिपराशक्तिज्ञापनासम्भवादित्यन्ये॥

## कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः।
## न्या० सू० ५।२।२०॥

कथकसभ्यानुविधेयैः प्रवर्त्तितायां कथायां व्याजेन कथाविच्छेदो विक्षेप इति लक्षणम्। विक्षेपः कालान्तरनयनम्। तेन कथादेशादपसरतोऽपि विक्षेपः संगृह्यते। तादृशचेष्टाया अपि व्याजत्वात्। अद्य न वक्तव्यं, श्वः परश्वो वा वाच्यमित्यादिकमपि। तथावश्यकप्रस्तावादयः। प्राणिधर्मास्तु न तथा। कथोपक्रममारभ्य तदवसानपर्यन्तमस्यावसरः।

ननु व्याजोत्तरस्य प्रकृतानुपयुक्ततयार्थान्तरत्वं, यथासम्भवमप्रतिभान्यूनाननुभाषणसंकरश्चेति चेत्। न। अनूद्य सदूषणोक्त्युत्तरं सभ्यानां निष्ठुरत्वमात्मनो वा हृदयकम्पमाकलय्य

कथादेशादपसरणरूपस्य विक्षेपस्य निग्रहस्थानान्तरासांकर्यात्। क्वचित्सांकर्येऽप्युपजीव्यत्वादशक्तिविशेषसूचकत्वादतिस्फुटप्रतीतिकत्वाच्चास्यैवोद्भाव्यता । अवश्योद्भाव्यं चैतत् । व्याजेन कथां न विच्छेदयेदिति रहस्यम् ॥

## स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा । न्या० सू० ५।२।२१॥

स्वपक्षे दत्तं दोषमनुद्धृत्य परपक्षे दोषाभिधानं मतानुज्ञा । यथा त्वद्धेतुरसाधको व्यभिचारित्वादित्याद्युक्तौ, तवापि हेतुरसाधको व्यभिचारित्वाद्बाधितत्वाद्वेत्याद्युक्तिः । यथा वा त्वं चौरः पुरुषत्वादित्युक्तौ, त्वमपि चौरस्तत एवेत्यादि । 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायान्मतानुज्ञात्वम् । एतेन मतानुज्ञाया जात्युत्तरं (?=रत्वं) केनचिदाशङ्कितमपास्तम् । परोक्तदोषस्वीकारस्यैवात्र दूषकताबीजत्वात्। न तु स्वव्याघातोत्तरस्येति ।

न चात्राप्राप्तकालत्वं, परपक्षं दूषयित्वा स्वपक्षे दोषोद्धारः कार्य इति समयबन्धेन कथाप्रवृत्तौ तदभावात् । यत्र सम्पूर्णमुक्त्वा दुष्टोऽयं मत्पक्ष इत्यनध्यवसायाद्वदति तत्रान्यासंकरः ।

अनिष्टभ्रमेणेष्टापादनं मतानुज्ञेत्यपरे । असङ्कीर्णता त्वेतन्मते यत्र प्रथमकक्षायां स्थापनानुकूलतयानिष्टभ्रमेणेष्टमापादयति तत्र। परे तु प्रसङ्गाभासमात्रं मतानुज्ञा । तेनात्माश्रयान्योन्याश्रयचक्रकानवस्थाभासानां, मूलशैथिल्यविपर्ययापर्यवसानेष्टापादन-

मिथोविरुद्धानां च मतानुज्ञात्वम् । नहि तेषामन्यत्रान्तर्भावः । यथा घटो दण्डजन्यः स्याद्, घटजन्यः स्यादित्यादिकमुदाहरणमित्याहुः। दूषणबुद्ध्यासत्प्रसङ्गो मतानुज्ञेति मणिकण्ठोऽप्येतदनुयायी ।

## निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् । न्या० सू० ५।२।२२ ॥

निग्रहस्थानोद्भावनावसरेऽपि तदनुद्भावनं पर्यनुयोज्योपेक्षणम् । विजातीयनिग्रहस्थानप्राप्तावित्रिदम् । पर्यनुयोज्योपेक्षणप्राप्तौ प्रतिवादिनस्तदुपेक्षणं तु स्वकौपीनविवरणापत्त्या न वादिनोद्भाव्यं, येन तदुपेक्षमाणो निगृह्येत । वादिकर्त्तव्याकरणे हि वादिनो निग्रहः । तत्तु मध्यस्थेनोद्भाव्यम् । तथा च मणिकण्ठः—उद्भावनार्हनिग्रहस्थानानुद्भावनं पर्यनुयोज्योपेक्षणमिति ।

यद्यपि झटितिसंवरणादाविव अनुद्भावितस्वदोषोद्भावनं स्वशक्तिप्रकर्षो मध्यस्थात् प्रतिवादिनश्च भवति, तथाप्यखण्डिताहङ्कारेण पराहङ्कारशातनस्य प्रयोजनस्य व्याघातापत्त्या न तदुद्भावनम् । प्रौढ्या मध्यस्थस्य प्रतिवादिनश्चाज्ञत्वं ज्ञापयितुं दुष्टमुद्भाव्य(?+म्) । ताभ्यामनुद्भावने स्वयमुद्भाव्योत्कर्षं लभेतैवेति तु बोध्यम् । न च वादे स्वकौपीनाविवरणमप्युचितमिति तदुद्भाव्यं, तत्र स्वदोषोद्भावनेनैव तत्त्वनिर्णयात्तदुद्भावनानौचित्यात् । तस्मान्मध्यस्थेनैव सर्वत्रेदमुद्भाव्यम् ।

सदुत्तरं वदन् परस्खलितमुपेक्षमाणः किमिति निगृह्येत

इति चेत्। निगृह्यत एव, प्रतिज्ञासंन्यासादीनामवश्योद्भाव्यत्वात्। अन्यथोक्तदोषत्यागेन कथाप्रवर्त्तने कथाविच्छेदो न स्यात्। षट्पक्ष्युत्तरं तु तदुद्भावनयोग्यमेवेति बोध्यम्।

अनेकनिग्रहस्थानपाते तु यद्येकतरमुद्भाव्यान्यतरमुपेक्ष्यते तदा न पर्यनुयोज्योपेक्षणम्। एकोद्भावनस्योचितत्वात्। अन्यथा दोषाधिक्येन स्वयमेव निगृह्येत। मृतमारणस्यानुचितत्वात्। यत्र तु सर्वे दोषा उद्भाव्या इति समयबन्धस्तत्र कस्यचिदनुद्भावने भवत्येव पर्यनुयोज्योपेक्षणम्। प्राप्तं निग्रहं नोपेक्षेतेति रहस्यम्॥

**अनिग्रहस्थाने निग्रहस्थानानुयोगो निरनुयोज्यानुयोगः।**[1]

तन्निग्रहस्थानानवसरेऽतन्निग्रहस्थानोद्भावनमतन्निग्रहस्थाने तन्निग्रहस्थानोद्भावनम्, अनुयोगानर्हानुयोगो वा लक्षणम्। तेन निग्रहस्थानमात्राभावेऽपि नाव्याप्तिः। नन्वाद्ये द्वितीये च तच्छब्देन निरनुयोज्यानुयोगो गृह्यते न वा। आद्य आत्माश्रयः। अन्त्ये त्वव्याप्तिः। निरनुयोज्यानुयोगाभावे तदनुयोगासङ्ग्रहादिति चेत्। न। निग्रहस्थानत्वेन तन्निवेशनादोषात्। इत एवारुचेर्वा तृतीयम्।

स चतुर्द्धा। छलं जातिराभासोऽनवसरग्रहणं च। छलादेराभासत्वेऽपि गोवृषन्यायेन विभागः। तत्र छलजाती उक्ते। ते सकले एव निरनुयोज्यानुयोगविशेषौ।

---

[1] Cp. न्या० सू० ५।२।२३:—अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः॥

आभासोऽनापतितनिग्रहाभियोगः । यथा निरुक्तप्रतिज्ञाहा-
न्याद्यभावेऽपि तदुद्भावनम् । प्रतिज्ञाहान्यादौ प्रतिज्ञासंन्यासत्वा-
द्युद्भावनं च । एवं हेत्वाभासशून्ये तदुद्भावनम् । सव्यभिचारादौ
विरुद्धत्वाद्युद्भावनं च । तथा छलजात्यभावे तदुद्भावनम् । वाक्छ-
लाद्यावुपचारच्छलत्वाद्युद्भावनम् । जात्यभावे जात्युद्भावनम् ।
एकजातौ परजातित्वोद्भावनं च ।

अनवसरग्रहणं तूक्तग्राह्याणामनुक्तिदशायामनुक्तग्राह्याणामु-
क्तिदशायामित्यादि । यथा विशेषणान्तरं दास्यसि चेत् प्रतिज्ञा-
न्तरं भविष्यतीत्यादि ।

ननु नेदं निग्रहस्थानान्तरं, छले नवसङ्ख्याककम्बलाद्यसि-
द्ध्युद्भावन इष्टापत्त्यादि(?=दे)र्जातौ विरोधादेरन्यत्रापि दो-
षान्तरस्य सत्त्वादिति चेत् । न । यत्र जल्पादौ तत्त्वनिर्णयविरोधि-
निग्रहस्थानमेवोद्भाव्यमिति समयबन्धस्तत्र प्रतिज्ञाहान्याद्यु-
द्भावेनऽन्यासंकरात् । आपन्नमेव निग्रहस्थानमुद्भावयेदिति
रहस्यम् ॥

## सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसि-
## सिद्धान्तः ॥ न्या० सू० ५।२।२४ ॥

परिगृहीतसिद्धान्तविरुद्धाभ्युपगमोऽपसिद्धान्त इति लक्ष-
णम् । सिद्धान्तपरिग्रहश्च कथाप्रवृत्तिकाले नैयायिकोऽहं, वैशेषि-
कोऽहमिति समयबन्धात्, नैयायिकमीमांसकमतपरिग्रहात्, मी-

ढ्या परमतग्रहणात्, त(?=त्व)यामुकमतं ग्राह्यमिति स्थेयानुग्रह-विरोधाच्च।

ननु विरोध एवायम्। न च स्ववाक्यव्याघातो विरोधः, अयं तु शास्त्रकारादिवाक्यविरोध इति वाच्यम्। अत्रापि नैयायिकोऽहमित्यादिस्ववाक्यविरोधसत्त्वादिति चेत्। न। शास्त्रकारादिवाक्यविरोधमुपजीव्यैव स्ववाक्यविरोधावधारणेन तस्य पार्थक्यात्। न चैवं शास्त्रकारवाक्यस्यागमत्वादागमबाध एवायमिति वाच्यम्। अधिकबलागमविरोधस्य बाधत्वात्। स्वाभ्युपगतशास्त्रकारमतस्यासम्यक्त्वेऽपि तद्विरोधस्यापसिद्धान्ततया भेदसत्त्वात्। क्वचित्सांकर्येऽप्यदोषात्। अत एव तीर्थिकनास्तिकयोर्विवादे स्वस्ववेदविरोधोऽपसिद्धान्त एव।

सौगतास्तु कथानुगुणसमयविशेषव्यवस्थाधीनप्रमाणदूषणाभ्यामेव कथासम्भवान्न शास्त्राभ्युपगमापेक्षेत्याहुः। तन्न। न्यायादिसिद्धान्तनिर्णयार्थवादादिस्थले न्यायादिशास्त्राभ्युपगमस्य प्रयोजकत्वात्॥

## हेत्वाभासाश्च यथोक्ताः॥ न्या० सू० ५।२।२५॥

प्रागुक्ताः सव्यभिचारादयो विभाजकसूत्रस्थहेत्वाभासपदवाच्या इत्यर्थः। एतत्सूत्रस्थचशब्देनोक्तनिग्रहस्थानबहिर्भूताः साध्यविकलादयो गृह्यन्त इति तान्त्रिकाः। वस्तुतो निग्रहस्थानत्वविधायकविभाजकसूत्रस्थचकारेणैव तान् संगृह्य निग्रहस्थानत्वं विधीयते। एतत्सूत्रं तु हेत्वाभासत्वविधायकमेवेति बोध्यम्।

अत्र प्रतिज्ञाविरोधादिनिग्रहस्थानोत्तीर्णस्य साधनप्रयोगस्य चतुर्द्धा दुष्टत्वम्।

हेतुतः। यथा सव्यभिचारादिपञ्चक(?=कात्)।

दृष्टान्ततः। यथा साध्यविकलसाधनविकलाश्रयविकलोभयविकलानुपदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतोपदर्शितान्वयविपरीतोपदर्शितव्यतिरेका(?=कात्)। तत्र साध्यविकलः। यथा पर्वतो धूमवान् वह्नेरयोगोलकवत्। साधनविकलः। यथा पर्वतो वह्निमान् धूमादयोगोलकवत्। आश्रयविकलः। यथा अत्रैव शशशृङ्गवदिति। उभयविकलः। तत्रैव जलह्रदवदिति। अनुपदर्शितान्वयः। यथा पर्वतो वह्निमान् धूमान्महानसवत्। अनुपदर्शितव्यतिरेकः। यथा पृथिवीतरभिन्ना पृथिवीत्वाज्जलवत्। केवलान्वयिनि व्यतिरेकमात्रस्य केवलव्यतिरेकिण्यन्वयमात्रस्य प्रदर्शने एतद् द्वयमित्यन्ये। विपरीतोपदर्शितान्वयः। यथा वह्निमान् धूमादित्यत्र यो यो वह्निमान् स धूमवानिति। विपरीतोपदर्शितव्यतिरेकः। यथा पृथिवीतरभिन्ना पृथिवीत्वात्, यत्र पृथिवी तन्नेतरभिन्नं यथा जलम्।

तर्कतः। यथात्माश्रयान्योन्याश्रयचक्रकानवस्थाविनिर्ग(?=ग)मोत्सर्गकल्पनालाघवकल्पनागौरवानौचित्यान्यथासिद्धाप्रयोजकसिद्धसाधनप्रतिकूलतर्कादितः। आत्माश्रयादि प्रागुक्तम्। अविनिगम्य(?=म)स्य दोषत्वं व्यक्तिविशेषत्वेन। निश्चयस्योद्देश्यत्वेन तु वह्निमत्त्वादिना तत्त्वे तार्णः पार्णो वेत्यविनिगमो दोषः। भूयःसाहचर्यमुत्सर्गः। यथा धियां प्रामाण्यं, शब्दानां मु-

ख्यार्थपरत्वमित्यादि । एतज्ज्ञानं प्रमाणसहकारिबाधकाभावे प्रमाणस्यौत्सर्गिकार्थपरिच्छेदकत्वात् । लाघवम् । यथा क्षितिकर्त्तुरेकत्वम् । गौरवम् । तत्कर्तुरनेकत्वम् । आद्यं प्रमाणस्यानुकूलं, द्वितीयं विरोधि । अनौचित्यं प्रामाणिकत्वाभावः । एनमाश्रित्याप्रामाणिकेऽर्थे मूकवावदूकयोः कतरः श्रेयानिति, यक्षानुरूपो बलिरिति, मग्नश्चेन्नागलोकं प्रविशेत्याद्युक्तिः । उपाधिरपि चशब्देन समुच्चीयते ।

उक्तानां हेत्वाभासान्तर्गतानामपि स्वशब्देनैवोद्भाव्यत्वम् । न तु हेत्वाभासतयेत्याचार्याः । एते हेत्वाभासभिन्नाः पृथगेव चशब्दसमुच्चिता निग्रहस्थानानीत्यन्ये । साध्यव्यभिचारव्याप्योपाधिव्यभिचारवानित्येवमुपाधिरुद्भाव्य इति दीधितिकृतः । एतत्तत्त्वमुपाधिवाद उक्तम् ॥

॥ इति निग्रहस्थानप्रकरणम् ॥



## अथ प्रसङ्गात् सिद्धान्तभेदा उच्यन्ते ।

तत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः, षोडशानामत्रैवान्तर्भावादिति **गौतमकणादौ** ।

द्रव्यगुणकर्मसामान्यानि चत्वार एवेति **तौतातिताः** ।

संख्यासमवायसादृश्यशक्तिसहितास्ते इत्यष्टाविति **प्राभाकराः** ।

एतेऽष्ट क्रमोपकारसंस्कारास्त्रय इत्येकादशेति **प्राभाकरैकदेशी चन्द्रः** ।

औपादानिकेन सहिते द्वादशेति **महार्णवकारः** ।

प्रकृतिपुरुषौ द्वौ संक्षेपेण, विस्तरेण पञ्चविंशतिरिति **साङ्ख्याः** ।

कार्यकारणयोगविधिदुःखान्ताः पञ्चेति **पाशुपताः** ।

ब्रह्मैकं, व्यवहारे तु धर्मिधर्माधारप्रदेशविशेषाः पञ्चेति **वेदान्तिनः** । **मुरारिमिश्राश्च** ।

पृथिव्यप्तेजोवायवश्चत्वार एव प्रत्यक्षसिद्धा इति **चार्वाकाः** ।

---

पृथिव्यादीनि नवैव द्रव्याणीति **कणादगौतमप्रभाकराः** ।

शब्दान्धकारसहितास्ते इत्येकादशेति **भट्टाः** ।

पृथिव्यप्तेजोवाय्वात्ममनोऽन्धकारशब्दा अष्टौ द्रव्याणि, न त्वाकाशकालदिशां द्रव्यत्वमिति **वेदान्तिनः** ।

---

चतुर्विंशतिर्गुणा इति कणादगौतमौ ।

एषु सङ्ख्याविभागपृथक्त्वद्वेषानपास्य वेगमधिकमन्तर्भाव्य एकविंशतिरिति गुरुमतानुयायिनः ।

शब्दस्थाने नादं तद्गुणं प्रक्षिप्य चतुर्विंशतिर्वैशेषिकोक्ता एव गुणा इति भाट्टाः ।

परत्वापरत्वपृथक्त्वधर्माधर्मविभागशब्दानपास्य तादात्म्यवृत्तिनादांस्त्रीनादाय विंशतिर्गुणा इति वेदान्तिनः ।

---

षोढा प्रत्यासत्तिरिति कणादगौतमौ ।

संयोगसमवायसंयुक्तसमवायसम्बन्धविशेषणताश्चतुर्विधा इति प्राभाकराः ।

संयोगमात्रमिति भाट्टाः ।

द्वादशप्रत्यासत्तयो योगजधर्मसंस्कारोत्प्रेक्षाज्ञानजातीनामाधिक्यादिति कश्चित् ।

---

## अथ चार्वाकसिद्धान्तः

प्रत्यक्षमेकं मानम् । मेयं तद्विषय एव । पृथिव्यप्तेजोवायवश्चत्वारि भूतानि तत्त्वम् । तदात्मको देहः । स एवात्मा, अहं गौर इत्यादिप्रतीतेः । वयोभेदे कामोद्भेदवत् पूर्वजन्मसंस्कारं विनापि स्तनपानादौ प्रवृत्तिः । कामार्थावेव पुरुषार्थौ । न ध-

र्मादि । सम्भावनयैव वह्न्यादौ प्रवृत्तिर्नानुमानात् । संवादेन प्रामाण्याभिमानः । अहं पश्यामि, अहं शृणोमीत्यादिप्रतीतेरिन्द्रियाण्येव चेतयन्ते । तानि च गोलकादिलक्षणान्येवेति चार्वाकैकदेशिनः ।

---

## अथ बौद्धमतम् ।

पञ्चस्कन्धात्मकं जगत् । तत्र गोघटादिविषयः सर्वो रूपस्कन्धः । सुखदुःखे वेदनास्कन्धः । विषयाणां नामानि संज्ञास्कन्धः । रागद्वेषमोहक्लेशाः संस्कारस्कन्धः । विषयोपलम्भो ज्ञानस्कन्धः ।

गन्धादिविषयपञ्चकात्मकमेव जगत् । तत्र पञ्चविषयसंघातः पृथिवी । गन्धेतरविषयचतुष्टयसंघातो जलम् । गन्धरसेतरविषयत्रयसंघातस्तेजः । शब्दस्पर्शसंघातो वायुः ।

रूपादिपरमाणुपुञ्ज एवावयवी क्षणमात्रवृत्तिः ।

प्रमाणं प्रत्यक्षमनुमानं च स्त्र(?=द्व)यमेव । ज्ञानविषयो द्विविधा(?) ग्राह्याध्यवसायभेदात् । अर्थक्रियासमर्थार्थप्राप्तिरध्यवसायः । व्यवहाराविसंवादि मिथ्याज्ञानं स्मृतिः ।

परूपं स्वरूपेण यया संव्रियते धिया ।
एकार्थप्रतिभासिन्या तामाहुः संवृतिं किल ॥ इति ।

ज्ञानं च विषयाद् भिन्नं सहोपलम्भानियमात् । सहोपलम्भ-

नियमात्तु विषया ज्ञानाभिन्नाः । ब्रह्माद्वैतं यथा वेदान्तिनां तथा ज्ञानाद्वैतं सौगतानाम् ।

तत्र वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकाश्चत्वारः सौगतप्रभेदाः । तत्र निराकारं ज्ञानं स्वजनकार्थविषयं, ज्ञानविषयौ च क्षणिकाविति वैभाषिकाः । साकारं ज्ञानम् । आकारसारूप्याच्च विषयोऽपि भिन्नः सिद्ध्यति । वर्त्तमानश्च विषयो ज्ञाने स्वाकाराधायकः । ज्ञानविषयौ च क्षणिकाविति सौत्रान्तिकाः । ज्ञानमात्रं क्षणस्थायि, बाह्यमलीकमेवेति योगाचारः । न ज्ञानं, न बाह्यम् । अतो न मानमेयव्यवस्था, किन्तु शून्यमेव जगदिति माध्यमिकाः ।

दुःखं समुदायो मार्गो निरोधश्चतस्र इति चित्तावस्थाः । तत्र फलभूता उपादानस्कन्धा दुःखम् । हेतुभूतास्ते समुदायः । नैरात्म्यक्षणिकतासाक्षात्कारो मार्गः । चित्तस्य क्लेशशून्यता निरोधः

अनादिर्भ्रमपरम्परा सूक्ष्ममात्रया स्थिता वासना । अहमित्याकारं ज्ञानमात्मा । स चालयविज्ञानप्रवाहः । अन्यः प्रवृत्तिविज्ञानप्रवाह इत्येके । प्रवृत्तिविज्ञानान्तःपात्येवालयविज्ञानमात्मेत्यन्ये । एकसन्तानान्तःपातादेव प्रतिसन्धानं वासना ।

क्लेशशून्या चित्तसन्ततिर्मुक्तिरिति वैभाषिकाः । चित्तनिरोधो मुक्तिरिति योगाचारः । निर्विषया चित्तसन्ततिर्मुक्तिरिति सौत्रान्तिकः ।

आलोचनमेव प्रमाणम् । स एवानुभवः । सविकल्पकं तु न

प्रमाणम्। परम्परया त्वर्थसम्बन्धात् प्रवर्त्तकम्। सम्वादाच्च तत्र प्रामाण्याभिमानः॥

---

## अथ पाषण्डमतम्।

स एव सोमसिद्धान्तः। चार्वाकमतानुसारेणायमूह्यः स्वातन्त्र्यं मोक्षः, पारतन्त्र्यं बन्धः, सुरासुरतसेवनं मुक्तिः।

---

## अथ दिगम्बरमतम्।

दिगम्बरा एवार्हताः। त्रयीसम्वरणशून्यत्वाद्दिगम्बराः। जीवाजीवास्त्रवो(?=व)सम्वरनिर्जरबन्धमोक्षाः सप्त पदार्थाः।

तत्र ज्ञानात्मको जीवः। स च विहङ्गप्रकृतिः। स एवात्मा मुक्तिभुक्त्यादिभाजनम्। देहेनावृतत्वात् सम्यङ् न चेतयते। इन्द्रियाणि विचित्राणि। तेन तद्धर्मेण कदाचित्पश्यत्यपि। यथा गृहस्थितो दीपो बहिरप्रकाशकः। कदाचिद्गवाक्षेण पश्यत्यपि।

अज्ञानरूपं यज्ज्ञानं तदजीवम्।

आस्त्रवो धर्माधर्मौ।

सम्वरो जीवाजीवयोरभेदाभिमानः।

निर्जरो व्रतनियमादि। तच्च मलपङ्कधारणादि।

बन्धनं बन्धो धर्माधर्मौ।

तदत्ययो मोक्षः। स च शरीरावरणोच्छेदः। तत्र सार्वज्ञम्।
दिगम्बरभेदा एव क्षपणकश्वेताम्बरनीलाम्बरचर्माम्बर-रक्ताम्बरबर्हाम्बरादयः। सर्वेषाममीषामहिंसा परमो धर्मः। सुरापानं निषिद्धम्।

---

कीर्त्तिदिङ्नागभदन्तज्ञानश्रीप्रभाकरादयः सौगतप्रभेदाः।

---

## अथ भट्टसिद्धान्तः।

द्रव्यगुणकर्मसामान्यात्मकाश्चत्वारः पदार्थाः। विशेषः समवायो वा न पदार्थान्तरम्। शब्दो द्रव्यं सर्वगतो नित्यश्च। श्रोत्रग्राह्यो नादस्तस्यासाधारणो धर्मः।

तमो द्रव्यान्तरम्। तदुक्तम्—

> तमः खलु चलं नीलं परापरविभागवत्।
> प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥ इति।

तच्चालोकाभावसचिवचक्षुर्वेद्यम्। गोलकाधिष्ठानतामसेन्द्रियवेद्यमिति तदेकदेशी मण्डनः।

आकाशं रूपवच्चक्षुर्वेद्यम्। विभुनोवा(?=रा)त्ममनसोरजः संयोगः। शरीरं पाञ्चभौतिकम्। कर्णशष्कुल्यवच्छिन्नो दिग्भागः श्रोत्रम्। द्रव्येण सह जातिगुणकर्मणां भेदाभेदः।

प्रत्यक्षानुमानशब्दार्थापत्त्यनुपलब्धयः षट् प्रमाणानि । शब्दस्थले पदार्थाः करणम् । पदानामवच्छेदकत्वम् । तदुक्तम्— पश्यतः श्वेतमित्यादि कविकाव्यहेतुज्ञानं पदार्थैरेव चिन्तोपनीतैर्जन्यते । शाब्दबोधे तु पदोपयोगः । पदार्थो जातिः । आक्षेपाल्लक्षणया वा व्यक्तेर्लाभः । लिङर्थः शब्दभावना, आख्यातसामान्यार्थोऽर्थभावना । अपूर्वं कल्प्यं, न वाच्यम् । तच्चायोग्यरूपतया फलपर्यन्तस्थायिनी योगादिक्रियैव सूक्ष्मरूपा ।

नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः । 'आनन्दं ब्रह्मणः' इत्यादिश्रुतेः । वेदो न पौरुषेयः । 'होलाकाः कार्याः' इत्यादिव्यहाराणाम्, 'अष्टकाः कार्याः' इत्यादिस्मृतीनां चाविगीतार्थानां मूलभूताः शाखाः प्रच्छन्नाः, न तूच्छ(?=च्छि)न्नाः, नापि नित्यानुमेयाः । प्रच्छन्नत्वं च सांप्रतिकभारतखण्डीयाध्ययनाविषयत्वम् ।

उपनयः प्रत्यासत्तिर्भट्टेनान्यथाख्यातिस्वीकारात् । ज्ञानमतीन्द्रियं ज्ञातताद्यनुमेयम् । प्रामाण्यमपि तथा । आत्मा जडबोधस्वरूप इत्यादि ॥

---

## अथ गुरुमतम् ।

प्रत्यक्षानुमानोपमानशब्दार्थापत्तयः पञ्च प्रमाणानि । प्रत्यक्षमिति मातृमेयविषयम् । तदेव त्रिपुटीप्रत्यक्षम् । अनुमित्यादीनामपि प्रमात्रंशे प्रमित्यंशे च प्रत्यक्षत्वम् । मेयांशेऽनुमितित्वम् । प्रामाण्यं ज्ञानग्राहकग्राह्यम् । विशिष्टज्ञानं न विशेषणज्ञानजन्यम् ।

विशिष्टवैशिष्ट्यज्ञानं तु विशेषणतावच्छेदकप्रकारकधीसाध्यम् ।

अनुमितिर्व्याप्यतावच्छेदकप्रकारकपक्षधर्मताधीसाध्या । न तु तृतीयालिङ्गपरामर्शसाध्या । व्याप्तिरनौपाधिकत्वम् । सा च सकृद्दर्शनग्राह्या । सामान्यलक्षणादि न प्रत्यासत्तिः ।

वेद एव प्रमाणम् । लौकिकः शब्दोऽनुवादकः । उपमानं तु संनिकृष्टसादृश्यज्ञानफलकं, सादृश्यस्य प्रमाणान्तरावेद्यत्वा दिति प्राञ्चः । सन्निकृष्टप्रतियोगिकमसन्निकृष्टे सादृश्यमुपमान गम्यम् । अयं गोसदृश इति ज्ञानोत्तरं गौरेतत्सदृशीति ज्ञानस्य प्रत्यक्षाद्यसाध्यत्वादिति शबरस्वामिनः । सन्निकृष्टेऽन्यप्रतियोगिकयत्किञ्चित्पदार्थज्ञानोत्तरमसन्निकृष्टे संनिकृष्टप्रतियोगिकपदार्थान्तरज्ञानमेवोपमानफलम् । तेन वंशाद् ह्रस्व इक्षुरिति ज्ञानोत्तरमिक्षोर्वंशो दीर्घ इत्यादिज्ञानमप्युपमानफलमेवेति तदेकदेशिनः ।

तदेतदयुक्तम् । सादृश्यादितत्तत्पदार्थस्योपस्थितस्य प्रत्यक्षेणैव विशिष्टज्ञानसम्भवात् । असन्निकृष्टे त्वस्तु मनसा तत्सम्भवः । अस्तु वा गौर्गवयसदृशी गवयनिष्ठसादृश्यप्रतियोगित्वादित्याद्यनुमानम् । तस्मात्संज्ञासंज्ञिसम्बन्धपरिच्छेद एवोपमानफलम् । करणं तु ज्ञायमानं गवयादिगतं गवादिसादृश्यमित्याचार्याः । अतिदेशवाक्यार्थज्ञानं करणं, सादृश्यदर्शनं व्यापार इत्यन्ये । इति संक्षेपः ॥

नानाग्रन्थवृथावचोविवरणैस्तत्सारतम्यार्थिना-

माजीवाभ्यसनेऽपि गूढविषयैर्व्युत्पित्सवो व्याकुलाः ।

मत्वैवं जयराम एष विशदैः सत्तर्कशुद्धाक्षरैर्
मुन्युक्तं निजगाद तत्करुणया विज्ञैरनुज्ञायताम् ॥ १ ॥
सन्न्यायप्रतिपादिता प्रतिपदं सद्युक्तिमुक्तान्विता
दुस्तर्कोद्धतवादिदर्पदमनी विज्ञैकवेद्याशया ।
निर्वाणाध्वविवेचिका सुमनसामन्तस्तमोनाशिनी
श्रीविश्वेशपदाम्बुजप्रणयिनी सिद्धान्तमालास्तु मे ॥ २ ॥

इति महामहोपाध्यायश्रीजयरामन्यायपञ्चाननभट्टाचार्य
विरचिता न्यायसिद्धान्तमाला समाप्ता ॥



# APPENDIX.

## VARIANTS FROM MANUSCRIPT ख COMPARED WITH THE READINGS OF THE PRESENT TEXT ( PP. 73—179 )

| Page | Line | Variants from ख | | Readings in the printed text |
|---|---|---|---|---|
| 85 | 12–15 | तत्र —वह्निरित्यत्र omitted | | |
| ,, | 16 | -साध्य- | for | -साध्यकः |
| ,, | 23 | -स्थलताव- | ,, | -स्थल |
| 86 | 6 | यत्र | ,, | यत्र यत्र |
| ,, | 7 | सर्वाणि वा | ,, | सर्वाणि ( क deletes सा वा after सर्वाणि) |
| ,, | 8–9 | साध्य-—पक्षे omitted | | |
| 87 | 5 | एतज्ज्ञानकालेऽप्यनुमित्या- पक्षे: | added after | -दोषत्वात् |
| ,, | 7 | सामग्रीत्वेन | for | सामग्रीत्वे |
| ,, | 9 | व्यभिचरिता- } व्यभिचरित } | ,, | व्यभिचारित्वाव्य- भिचारित्व- |
| 87 | 10 | -व्याप्य- | ,, | -व्याप्यत्व- |
| ,, | ,, | -धर्म- | ,, | -धर्मत्व- |
| ,, | 15–16 | तदभावस्य | ,, | तदभाव-to व्युदासः। |
| ,, | 22 | तु | omitted | |
| 88 | 2 | चैवमेवास्तु | for | चैवास्तु |
| ,, | 2–3 | कश्चिद्—वाच्यम् omitted | | |

| | | | | |
|---|---|---|---|---|
| 88 | 6 | हेतुमति | omitted | |
| ” | 14 | -व्यधिकरणात्तत्व- | for | -व्यावृत्तत्व- |
| 89 | 5 | अवृत्तित्वस्य | ” | अवृत्तित्वस्या- |
| ” | ” | च | omitted | |
| ” | 6 | जायते | for | ज्ञायते |
| ” | 8 | असाधारण्यं | ” | साधारण्यमसा-धारण्यं च |
| ” | 10 | -मात्र- | ” | -मात्रे |
| ” | 12–13 | -सामान्या- to -मिति- | omitted | |
| ” | 23 | -योग्य- | for | -योग- |
| 90 | 11 | तत्वत् | ” | तद्वत |
| ” | 14 | तत्पक्षकतत्साध्यका- | for | तत्साध्यकतद्धे-तुका- |
| ” | 16-17 | -विषयमात्रवृत्तित्व- | for | -विषयता—-सत्ताकत्व- |
| ” | 19 | विशिष्टान्तस्य— -योगेन | omitted | |
| 91 | 11 | इति न | ” | |
| ” | 15 | तस्य | for | तस्या |
| ” | 16 | -धूमादौ | ” | -धूमत्वादिविशिष्टे |
| ” | 17–18 | स्वमते | ” | गुरु-to-कत्वे |
| ” | 19 | व्यापक- | ” | साध्याव्यभि-चरित- |
| ” | ” | -भावोप्यसाधा- | ” | -भावेऽपि साधा- |
| ” | 20 | तस्या- | ” | तस्य |

| | | | | |
|---|---|---|---|---|
| 91 | 21–23 | व्यापकत्वं सामानाधिकरण्यं च विशकलितमेव निवेश्यम् | for | व्याप्ति- to वाच्यः |
| 92 | 6 | न तत् | ,, | तत् |
| ,, | 7 | 'वृत्तिर् ( also क ) | ,, | -वृत्ति- |
| ,, | 8 | -ज्ञानस्या- | ,, | -ज्ञानस्य |
| ,, | 10 | ज्ञानस्य हि | ,, | ज्ञानस्य |
| ,, | ,, | -योगित्व- | ,, | -योगि- |
| ,, | 14 | निश्चयत्वा- | ,, | निश्चयत्व- |
| ,, | 15 | वेत्यस्या- | ,, | वेत्यस्य |
| ,, | 17–18 | तत्सन्देहो-to-कत्वात् omitted | | |
| ,, | 21 | अन्यदाहा- | for | अन्यदा- |
| 93 | 18 | -चारित- | ,, | -चरित- |
| ,, | 19 | -साधन- | ,, | -विशिष्टसाधन- |
| 94 | 9 | उपाधेय- | ,, | उपधेय- |
| ,, | 15 | स्पार्शन- | ,, | स्पर्शन |
| ,, | 23 | तस्य | omitted | |
| 95 | 10 | न तु | for | न च |
| 96 | 8 | -सामान्येन वा | ,, | -सामान्येन |
| ,, | ,, | ननु | ,, | न च |
| ,, | 22 | विरुद्ध | ,, | तद्विरुद्ध |
| 97 | 2 | इति तु | ,, | इति |
| ,, | 3 | -सद्धेतात् | ,, | -द्रव्यत्वादात् |
| ,, | 11 | -कृता | ,, | -कृतां |
| ,, | ,, | असाधारण्यमुच्यते | ,, | असाधारण्यम् । |
| ,, | 12 | -स्वविशिष्टप्रकृतहेतु- omitted | | |

| | | | | |
|---|---|---|---|---|
| 97 | 15 | -विरोधीति वोध्यं | for | -विरोधि |
| ,, | ,, | [illegible] | omitted | |
| ,, | 21 | -णादि- | for | -ण्यादि- |
| 98 | 11 | आह | ,, | आहुः |
| ,, | 18 | त्वं वा | ,, | -त्वे |
| 99 | 10 | -यान्त | ,, | -यास्तु |
| ,, | 16 | त्वद्ग्रहं | ,, | दुर्ग्रहम् |
| ,, | 18 | -नात्मा | ,, | -नप्रत्यक्षात्मा |
| ,, | 20 | -व्याप्य- | ,, | -व्याप्यव्याप्य- |
| ,, | 20-21 | -नादनुमितिरूपो | ,, | -नादितोऽनुमित्यादिरूपो |
| ,, | 22 | शब्दानुमानाभ्यां | ,, | प्रत्यक्षशब्दाभ्यां |
| 100 | 3 | -मात्रत्व- | omitted | |
| ,, | 7 | -ज्ञान- | ,, | |
| ,, | 11 | शाब्दः | for | शाब्द |
| ,, | 13 | शंखे added on the margin after | | -वर्तिनि |
| ,, | 14 | स्थान्वा- | for | स्थाना- |
| 101 | 5-6 | विरोधा-to ग्राह्यौ | omitted | |
| ,, | 7 | तदभावनिर्णयत्वेनेव | ,, | |
| ,, | ,, | अपि | ,, | |
| ,, | 18 | -जन्य | for | -जन्ये |
| ,, | 19 | तत्त्वतत्वेन | ,, | न तु तद्वत्त्वेन |
| 102 | 5 | स्व- | ,, | सु- |
| ,, | 5-6 | -विशेषस्यापि | ,, | -प्रात्यक्षिकसंशयादेरपि |

| 102 | 7 | -भानविशेषां | for | -भानादिर् |
|---|---|---|---|---|
| ,, | ,, | त्वसर्वज्ञा- | ,, | तु सर्वज्ञा- |
| ,, | 9 | -वर्त्तित्वादिना | ,, | -वर्तित्वविशिष्टत्वेन |
| ,, | 17 | -त्वस्य जन्यता- | ,, | -त्वस्यान्यत्रा- |
| | | ( क corrects जन्यत्रा-to अन्यत्रा- ) | | |
| ,, | 20 | तद्धेतु | for | तत्त्वे तु |
| 103 | 14 | -विषयि- | ,, | -विषय |
| ,, | ,, | -पक्षस्तु | ,, | -पक्षः |
| ,, | 21 | -व्याप्यव्याप्य- | ,, | -व्याप्य- |
| ,, | 22 | पक्षे उक्तप्रतिपक्षोन्नायक- | ,, | पक्षे शुद्ध- |
| 104 | 2 | -व्याप्यव्याप्या- | ,, | -व्याप्या- |
| ,, | ,, | -व्याप्यव्याप्या- | ,, | -व्याप्या- |
| ,, | 16 | वाध्ये | ,, | वाधे |
| ,, | 18 | -पक्षसाध्य- | ,, | -पक्ष- |
| ,, | 20 | -व्याप्यव्याप्या- | ,, | -व्याप्या- |
| 105 | 2 | न च | ,, | ननु |
| ,, | ,, | -णयस्य | ,, | -णस्य |
| ,, | 5 | -व्याप्य- | omitted | |
| ,, | 7-8 | प्रकृत-to ज्यायः | ,, | |
| ,, | 9 | -रूपोक्त्या | for | -रूपेण ह्रदः |
| ,, | 10 | -ह्रदत्वादिमानपक्षोऽपि | ,, | -वत्पक्षादिकं |
| ,, | 13 | प्रमितः | omitted | |
| 105 | 17 | पक्षः | omitted | |
| 106 | 7 | -रूपे | for | -रूप- |
| ,, | 8-9 | -णयेऽति- | ,, | -णय इति |

| | | | | |
|---|---|---|---|---|
| 106 | 10 | -णसाध्य- | for | -णासाध्य- |
| | | ( क corrects -णा-to -ण- ) | | |
| ,, | 11 | -त्रृत्यत्व- | for | -त्रत्यन्यत्व- |
| ,, | 14 | अथ | ,, | कथम् । |
| ,, | 17 | तत्र स्वरूपासिद्ध्या-<br>दिसंग्रहायाविरोध्यंतं<br>इत्थं च | for | तत्राविरोध्यन्तेन |
| ,, | 18 | ह्रदत्वाद् | ,, | अह्रदत्वाद् |
| ,, | 19 | the first -स्व- | omitted | |
| ,, | ,, | साध्यविशेषणासिद्धेश्च | ,, | |
| ,, | 21 | रूपस्याप्रसिद्धेर् | for | -ऽप्रसिद्धेर् |
| ,, | 22 | न | ,, | नैवम् । |
| 107 | 4 | ह्रदत्वान् | ,, | ह्रदत्वाद्धा |
| ,, | 8-9 | वह्निमान् मेयत्वाद् omitted | | |
| ,, | 9 | -द्रव्यत्वम | for | -मेयत्वम् |
| ,, | 10 | वह्न्यभाव- | ,, | वह्न्य- |
| ,, | 11 | वह्निमान् ह्रदत्वाद् omitted | | |
| ,, | 13 | -त्वाभावाभावत्व | for | -त्वा- to -त्व- |
| ,, | 23 | -विषयतया | ,, | -विषयता- |
| 108 | 4 | वा घटो | ,, | घटो |
| | | ( क has वान् घटो ) | | |
| ,, | 4-5 | द्रव्यकर्मा- to सत्त्वात् omitted | | |
| ,, | 5 | -समवेतात्वे- | for | -समवेतादेवे- |
| | | ( क corrects -त्वे-apparently to -द्रे- ) | | |
| ,, | 10 | अपार्थकत्वम् | for | अपार्थकत्वाद् |
| ,, | 15 | -साधन- | , | साधना- |

| | | | | |
|---|---|---|---|---|
| 109 | 3 | विषयतयेति | for | तयेति |
| ,, | 5 | -तत्वा- | ,, | -त्वत्वा- |
| ,, | 10 | रूपवत् | ,, | रूप- |
| ,, | 11 | न देयं | ,, | देयम् |
| ,, | 15 | तत्र | ,, | तत्रा- |
| ,, | 17 | लक्षत्वात् | ,, | लक्षणत्वात् |
| 110 | 9–10 | व्याप्तिज्ञान- | ,, | ज्ञान- |
| ,, | 12 | -वैकल्यवद् | ,, | -वैकल्यं |
| 111 | 4 | -भावत्वाद् | ,, | -भावाद् |
| ,, | 6 | उपपद्यते | ,, | उत्पद्यते |
| ,, | 7 | ज्ञाता | ,, | जाता |
| ,, | 8 | -व्येति | ,, | -व्येत । |
| ,, | 11 | -पाद- | ,, | -पादः |
| ,, | ,, | -भावः | ,, | -भाव- |
| ,, | 22 | वा | omitted | |
| 112 | 9 | तत्त्वं तु | for | तद्धंतु- |
| ,, | ,, | -निश्चयः | ,, | -निश्चयस्य |
| ,, | ,, | -सत्वेव | ,, | -सन्नेव |
| ,, | 13 | -भावात् | ,, | -भवेत् |
| ,, | ,, | शंख्यादौ शुक्लत्वाद्यभावभ्रमे च | for | शङ्खादौ |
| ,, | 16 | पक्षावृत्ति | ,, | पक्षवृत्ति |
| ,, | ,, | साध्या- | ,, | साध्य- |
| ,, | 18 | एवान्वय- | ,, | एवानन्वय- |
| ,, | 21 | -ग्रहविरोधित्वे | ,, | -ग्रहाविरोधित्वे |
| ,, | 23 | -विशेषणा- | ,, | -विषयिणी- |

| | | | | |
|---|---|---|---|---|
| 113 | 15 | तस्य omitted | | |
| 114 | 8 | after -विशेष्यक- is added<br>शुद्धवह्नित्वावच्छिन्नप्रकारक-<br>ग्रहं प्रति पर्वतत्वावच्छि-<br>न्नविशेष्यकशुद्ध- | | |
| 114 | 9 | एव omitted | | |
| ,, | 12 | तु ,, | | |
| ,, | 20 | -वह्नित्वावच्छिन्न- omitted | | |
| 115 | 2 | -पर्वत- | ,, | |
| ,, | 3 | -नील- | for | -वच्छे- to न |
| ,, | 5 | After-त्वं is added:—<br>न दोषाय | | |
| ,, | 6–7 | पर्वतत्वादौ | for | पर्वतत्वा- |
| 116 | 10 | यदि च | ,, | यदि |
| ,, | 15 | संनिकर्षाद् गेहं घ-<br>टवदिति चाक्षुष-<br>स्य वारणाय त-<br>त्स्वीकारः अन्या-<br>वच्छेदेन संनिक-<br>र्षाद् | for | संनिकर्षाद् |
| 117 | 2 | वादः | ,, | बाधः |
| ,, | ,, | तद्ग्रहे | ,, | तत्रत्वे |
| ,, | ,, | -नियमः पक्षः- | ,, | -नियमः |
| ,, | 11 | पृथिवीत्वाद्य- | ,, | पृथिवीत्वा- |
| ,, | 11–12 | -कालदेशावच्छेदेन | ,, | -कालावच्छेदेन |
| ,, | 12 | -स्व- | ,, | -द्र- |
| ,, | 15 | -रूपपक्षता- | ,, | -प्रकृता- |

| | | | | |
|---|---|---|---|---|
| 117 | 21 | ज्ञायत | for | जायत |
| 118 | 9 | तदा | ,, | तद्- |
| ,, | 12 | परामर्षात्वाधित | ,, | परामर्शत्वाद्बा- धितद् |
| ,, | 20 | -सिद्धिश्च | ,, | -सिद्धिः |
| ,, | 23 | -समवाययोराभास- | ,, | -समवायाभा- वास- |
| 120 | 6 | विशेष- | ,, | विशेषण- |
| ,, | 8 | Both क and ख have | | -ऽर्थोपपत्त्या |
| ,, | 12–13 | तात्पर्यसंचारेण to परा- जयः | omitted | |
| ,, | 14 | अभिहितेऽनभिहितत्वम् | for | अनभिहिते- ऽभिहितत्वम् |
| 121 | 17 | दाहक इति | ,, | दाहकः |
| ,, | 18 | क्रोशन्तीति | ,, | क्रोशन्ति |
| ,, | 19–20 | प्रतिवसतीति | ,, | प्रति-to-ति |
| 122 | 4 | तत्वात् | ,, | सत्त्वात् |
| ,, | 8 | इत्युक्त्या | ,, | इत्युक्ता |
| ,, | 10 | तत्वात् | ,, | सत्त्वात् |
| ,, | 19 | ऽवृत्ति- | ,, | वृत्ति- |
| 123 | 21 | च | omitted | |
| 124 | 8 | शक्ति- | for | शब्दयुक्ति- |
| 125 | 6 | -कंवलत्वम् | ,, | कम्बलत्वम् |
| ,, | 15 | अत्रोपचारस्थलं | ,, | तत्रोपचारच्छलं |
| ,, | 16 | -धर्मात् | ,, | -धर्मा |
| 127 | | फालितः | | फलतः |

| | | | | |
|---|---|---|---|---|
| 127 | 11 | एतद्व्युत्पादन | for | एतद्युपादान· |
| ,, | 12 | ·स्फुर्तौ | ,, | ·स्फूर्तै |
| 128 | 2 | शब्दत्ववद् | ,, | शब्दवद् |
| 129 | 5 | कृतकत्वाद् | ,, | कृतकतद् |
| ,, | 15 | व्याघातः | ,, | व्याघाताद् |
| ,, | 16 | ·धिकं | ,, | ·धिकत्वं |
| ,, | 18 | ततः | omitted | |
| 130 | 4 | ·वति च | for | ·वति |
| ,, | 6 | इत्युक्ते कार्यत्वादि मति घटादौ | ,, | इति घटादौ |
| ,, | 11-12 | व्याप्यतोपत्त्या | ,, | व्याघातापत्त्या व्याप्त्या |
| 131 | 4 | स्यात् यदि च स्यात् | ,, | स्यात्। |
| ,, | 8 | बाधः साधनापकर्ष | omitted | |
| ,, | 19 | तत्तु | for | तद् |
| ,, | 20 | ·भाव· | ,, | इव |
| 132 | 18 | ·साध्यता | ,, | ·साध्य |
| 133 | 9 | सता | ,, | सत्वा |
| 134 | 3 | अनवस्था | ,, | अनवस्थायं |
| ,, | 4 | हेतावपि | ,, | हेतोरपि |
| ,, | 9 | ·भासा· | ,, | ·भासो· |
| ,, | 16 | तयात्र | ,, | ·तया सनु |
| 135 | 8 | पार्थिवत्व· | ,, | पदार्थवत्व· |
| ,, | 19 | ·संशायकमप्यस्ति | omitted | |
| ,, | 20 | निर्णायकान्निर्णये | for | निर्णायकान्निर्णयो |
| 136 | 8 | ·भासेयं | ,, | ·भावमेयं |
| ,, | 10 | कालत्रयेपि | ,, | कालत्रये |

| | | | | |
|---|---|---|---|---|
| 136 | 16 | वा | for | त्वा |
| 137 | 19 | -साध्या- | ,, | -साध्य |
| 138 | 12 | -जात्यन्यजातित्वम | ,, | -जातित्वम् |
| ,, | 18 | त्वदुक्ता- | ,, | त्वदुक्त- |
| 139 | 4 | अथ पर्वतो | ,, | पर्वतो |
| ,, | 13 | तदतद्- | ,, | तदत्र |
| 139-140 | 15-2 | उपलब्धि-to उक्ते omitted | | |
| 140 | 12 | अनुपलब्धिधर्मानुपलब्धा | for | अनुपलब्धा |
| 141 | 15 | -तर्कवत्त्वम् | ,, | -तर्कत्वम |
| ,, | 17 | वा | omitted | |
| 142 | 10 | चरमे | for | वा । चरमे |
| ,, | 15 | अनवस्था- | ,, | अनवस्थां |
| 143 | 4 | सच् | ,, | असच् |
| ,, | 9 | क्षणिकत्व- | ,, | क्षणिक- |
| 144 | 4 | -मात्रेन्धनेन | ,, | -मात्रे इन्धनेन |
| ,, | 21 | -विकल्पोपि | ,, | -विकल्पो |
| 145 | 10 | -पक्षी | ,, | -पक्षीय- |
| ,, | ,, | -पक्षीत्व- | ,, | -पक्षीयेऽ- |
| ,, | 14 | अनित्यवद् | ,, | अनित्याद् |
| ,, | 20 | किंचित् शब्दादि | ,, | शब्दादि च |
| ,, | 21 | तथा | ,, | यथा |
| 146 | 5 | -पक्ष्या- | ,, | -पक्षा- |
| ,, | 6 | -पक्षा- | ,, | -पक्ष्या- |
| ,, | 8 | ऽसदुत्तरम | ,, | सदुत्तरम् |
| ,, | ,, | तावता- | ,, | तावता तथा- |

| | | | | |
|---|---|---|---|---|
| 146 | 10 | सत्कथैव असदुत्त राभिधाने | omitted | |
| ,, | 19 | स्वात्यज्ञत्व | for | वाग्रुक्तत्व· |
| 147 | 2 | कथक· | ,, | कथम् |
| ,, | 9 | ·दैवागत· | ,, | ·देवागत· |
| 149 | 6 | ·प्रातिस्विक· | ,, | ·प्रतिबन्धक· |
| 150 | 11 | व्यभिचारोद्भावने | ,, | व्यभिचारो· |
| ,, | 12 | हेतुहानिः | ,, | हानिः |
| ,, | 14 | दृष्टान्त | ,, | ·ऽदृष्टान्ते |
| 151 | 15 | ·सिद्धान्तात् | ,, | ·सिद्धान्तः |
| ,, | 20 | पक्षत्वत्यागात् प्रति· ज्ञाहानिश्च: शंकया ( sic ) | ,, | पक्षत्वत्यागात् |
| 152 | 11-12 | एकत्र वाक्ये तद्घ टकयोर्वाक्ययोः प· नयोर्वा मिथोव्या घातः प्रतिज्ञाविरोधः | ,, | प्रतिज्ञाहेत्वोर् —·विरोधः |
| ,, | 13-17 | यथा-इत्यादौ | omitted | |
| ,, | 18-19 | वाक्यघटितवाक्यत्वं | for | ·वाक्यत्वं |
| 153 | 3 | प्रतिज्ञाविरोध इत्यत्र प्रतिज्ञापदेन | ,, | प्रतिज्ञाहेतुपदेन |
| ,, | 7-8 | अत एव | omitted | |
| ,, | 8 | एत्र च हे· | for | एव हे· |
| ,, | 10 | ·कारणत्व· | ,, | ·कारण· |
| ,, | 19 | वोधना· | ,, | रोदना· |
| ,, | 20 | ,, | ,, | ,, |
| 154 | 2 | क एव· | ,, | एत्र· |
| ,, | 10 | स्प्र(?)लित· | ,, | सवलित· |

| | | | | |
|---|---|---|---|---|
| 154 | 11 | -विषयेयं | for | विषय- |
| ,, | 20 | सामान्ये | ,, | सामान्य- |
| 155 | 13 | -र्था- | ,, | -व्यर्था- |
| 156 | 5 | -भावने | ,, | -भावेन |
| ,, | 13 | न | omitted | |
| ,, | 18 | अथ | for | अर्थान्तरम् |
| ,, | 21 | व्यवस्थापनात् | ,, | स्थापनात् |
| 157 | 7 | -वृत्तिकैव | ,, | -वृत्तिकैस्येव |
| 158 | 10 | अत्र—भेदात् | omitted | |
| ,, | 12 | प्रतिज्ञायामेव | for | प्रतिज्ञामेव |
| ,, | 13 | प्रतिज्ञा—to मानाभावात् | omitted | |
| ,, | 16 | -प्रादांपा- | for | -पादान्त्या- |
| 159 | 5 | तत्तत्- | ,, | उत्तर- |
| ,, | 13 | मात्रावर्णा- | ,, | मात्रा |
| ,, | 14 | न्यूनमेव | ,, | न्यूनमवय- |
| ,, | 17–19 | स्वीकृत्यान्यथाकरणमपसिद्धान्तः किंतु स्वीकृत्यास्वीकारः | ,, | स्वीकृत-to-गम |
| 160 | 8–10 | न च to -कत्वान् | omitted | |
| ,, | 11 | इति वा | for | इति |
| ,, | 17 | नैयायिकस्या- | ,, | नैयायिकस्य |
| 161 | 3 | -द्वारे कृतेः ( sic ) | ,, | -द्वारकृतः |
| ,, | ,, | अर्थापन्न- | ,, | अर्थायत्त- |
| ,, | 6 | आर्थस्य | ,, | अर्थस्य |
| ,, | 8,10 | सुस्थेन | ,, | स्वस्थेन |
| ,, | 11 | एकदेशानुवादेन | omitted | |

| | | | | |
|---|---|---|---|---|
| 161 | 16 | कुंठतया | for | कण्ठतया |
| 161-162 | 17-3 | म च to भास्करः omitted | | |
| 162 | 5-6 | वाद्युक्ते to अपि | „ | |
| „ | 6-8 | वार·to बोध्यम् | „ | |
| „ | 18 | अवि· | for | अव· |
| 164 | 8 14 | कथायां स्वाभ्युपगत·स्य दुष्टत्वस्वीकारो मतानुज्ञा स्वपक्षे दो·षमनुद्धृत्य परपक्षे दो·षाभिधानं सेत्यन्ये । | „ | स्वपक्षे to ·त्तरस्येति । |
| 165 | 2-3 | ·भावसंभव इत्याहुः | „ | ·भावः to आहुः |
| „ | 4 | मणिकंठः उदाहरणं भवांश्चौरः पुरुषत्वा·दित्युक्ते त्वमपि चौर इत्युत्तरं । | „ | मणि-to-यायी |
| „ | 18 | लभते | „ | लभेत |
| 167 | 8-9 | अनुक्त· to दशायाम् omitted | | |
| „ | 12 | इष्टापत्त्यादेर् | for | इष्टापत्त्यादिर् |
| 168 | 2 | द्वयाऽस्वक· | „ | तयामुक· |
| „ | 2-3 | स्थेयानुविधेयनियो·गाश्च | „ | स्थेया· to च |
| 169 | 4 | ·पञ्चकात् | „ | ·पञ्चक |
| „ | 6 | विकलात् उक्तितो यथा· | „ | ·विकला· |
| „ | 7 | ·रेकात् | „ | ·रेका |
| „ | 21 | ·गमस्य | „ | ·गम्यस्य |
| „ | 22 | तु | omitted | |
| 171 | 12 | करण· | for | ·कारण· |

| | | | | |
|---|---|---|---|---|
| 171 | 16 | ·गोतम· | for | ·गौतम· |
| 172 | 8 | ·नादान· | ,, | ·नादांस् |
| ,, | 13 | योगजधर्म्ममंत्रजधर्म्म | ,, | योगजधर्म· |
| 173 | 9 | ·मोहाः | ,, | ·मोह· |
| | | ( क has ·मोहा ) | | |
| ,, | 15 | ॾयमेव | ,, | स्वयमेव |
| ,, | 15-16 | ·विषयाद्विविध· | ,, | ·विषयो द्विविधा |
| 174 | 4 | ·माध्यमकाश् | ,, | ·माध्यमिकाश् |
| | | ( क corrects ·म-to-मि· ) | | |
| ,, | 11 | माध्यमकाः | ,, | माध्यमिकाः |
| | | ( also क ) | | |
| | | ( ख reads माध्यमका on p. 21, line 11 also. ) | | |
| ,, | 17 | अन्य· | for | अन्यः |
| 175 | 9 | जीवाजीवाश्रय· | ,, | जीवाजीवास्रवो |
| ,, | 16 | आभावो | ,, | आस्रवो |
| 176 | 15-17 | गोलका· to वेद्यम् omitted | | |
| ,, | 17 | ·रा· | for | वा· |
| 177 | 4 | शुतम् | ,, | श्वेतम् |



# IMPORTANT CORRECTIONS.

| Page | Line | Correct reading | Incorrect reading |
|---|---|---|---|
| 3 | 9 | प्रत्यक्षत्वाल् | प्रत्यक्षत्वाल |
| 4 | 13, 15 | तत्त्व- | तत्व- |

( Similar mistakes, i. e. त् for त्त्, occur in a few other places also. )

| Page | Line | Correct reading | Incorrect reading |
|---|---|---|---|
| 5 | 22 | -छेद्- | -छदे- |
| 9 | 12 | घ्रा- | प्रा- |
| 14 | 11 | -नाधि- | -नधि- |
| 15 | 3 | संसर्गत- | ससंगर्त- |
| " | 7 | क्षणा- | क्षण- |
| 19 | 19 | -करणा- | -कणा- |
| 27 | 10 | -ऽबाधित- | बाधित- |
| 32 | 16 | दृष्टान्तः | दृष्टन्तः |
| 35 | 13 | प्रयुक्तत्वं | प्रत्युक्तत्वं |
| (41 | 6 | The emendation to be struck out. ) | |
| 45 | 3 | -शङ्का- | -ङ्का- |
| 64 | 14 | -नां | -ना |
| 73 | 15 | प्रत्येक- | प्रत्पेक- |
| " | " | तादृश- | ताद्श- |
| 84 | 4 | -विशेष- | -विशेषे- |
| 122 | 21 | -पद्- | -पदा- |
| 150 | 19 | -योज्यो- | -योज्या- |
| 155 | 9 | एवं | एव |

| | | | |
|---|---|---|---|
| 166 | 12 | -सर तान्नि | -सरऽतान्नि- |
| 173 | 9 | -मोहाः | -मोह- |
| 176 | 6 | कीर्ति- | कीर्ति- |
| 177 | 8 | यागा | योगा- |



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Rañgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No. 6—(Part I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gañgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M..A Rs. 1-4

No 7—( Part II ) Ditto Ditto Rs. 1-8

No. 8—The Kāvyaḍākinī, by Gañgānanda Kavīndra,
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10-6

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya.
Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya.
Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya.
Rs. 0-14

No. 15-(Part I)-The Tripurārahasya, (Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-12

No. 15-( Part III )—Do. Do.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hosing Sāhityopādhyāya.
Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt
Rs. 0-14

No. 18–(Part I)–The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-12

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2-4

No. 19–( Part. II ) Ditto Ditto Rs. 2-12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchanana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1-2

No 21–( Part II ) Ditto Ditto

No. 22–The Dharmānubandhi S'lokachaturdaśī by S'ri S'esa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No. 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares.

No. 24–S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma-Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.
Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post–Achārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares.

No. 25–Sāpiṇḍyakalpalatikā by Sadāśiva deva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares.

No. 26–Mṛgāṅkalekhā Nātikā by viśvanātha deva Kavi.
Edited with Introduction etc. by Nārāyaṇa Sāstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its Evolution, by Gaṅgānātha Jhā.

(b) The view-point of Nyāya Vaiśeṣika Philosophy, by Gopinath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-15

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vira S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali (English Translation), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśesika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgānātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstri.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G. L. Sinha. Rs.

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vānaras as depicted in the Rāmāyaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vājasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri.

(e) Formal Training and the Ancient Indian Thought, by G. L. Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nāth Roy.

(h) Notes and Queries (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—( In progress)

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) Studies in Hindu Law (5): Evidence by Ganganatha Jha

To be had of

The Superintendent Government Press.

Allahabad. U. P.